चतुर्भिः कलापकम् ॥

नृपादेशादसौ भाप्तो ज्ञातवृत्तो महीपतेः ।
दधानो ध्यानमाचख्यौ राक्षसीललितं त्विदम् ॥ ३३ ॥
इतो वेश्याऽऽह सोल्लासं पुत्रिका मम मान्त्रिक ! ।
मृता मारिप्रयोगेण विनाऽऽधिव्याधिगौरवम् ॥ ३४ ॥
अवादीद् मन्त्रवादी च मन्त्रात् प्राणिति ते सुता ।
इतोऽभ्येत्यागदच्चेटी स्वामिनी मम जीवति ॥ ३५ ॥
सत्यप्रत्यायितक्ष्मापसमादेशेन मान्त्रिकः ।
लिखित्वा मण्डलं ह्रांह्रींमन्त्रविन्याससुन्दरम् ॥ ३६ ॥
क्षामकुक्षिलसत्रेतां चण्डीं मूर्त्तिमतीमिव ।
आनयद्राक्षसीं भीमां स्फारस्फेत्कारकारिणीम् ॥३७(युग्मम्)
सविस्मयं नृपो दध्यौ महामन्त्रविजृम्भितम् ।
य एनां राक्षसीं मन्त्रिन्नानैषीत् पश्यतां हि नः ॥ ३८ ॥
मान्त्रिकः प्राह यत् कार्य्यं तत् कृतं तव सन्निधौ ।
आकार्यतां ततो वेगाद्विवादोऽस्य वधाय सः ॥ ३९ ॥
अथात्राभ्येति चाण्डालो हरिश्चन्द्रसमन्वितः ।
अयोध्येशं ततो दृष्ट्वा शुकोऽवादीद् द्विजादिवत् ॥४०॥
स्वस्ति तुभ्यं हरिश्चन्द्र ! भरतान्वयभूषण ! ।
सत्त्वमानवतां धुर्य ! शौर्यचर्यातरङ्गित ! ॥ ४१ ॥
साक्षेपमथ राजोचे भाषसे किं प्रमत्तवत् ? ।
नात्र कोऽपि हरिश्चन्द्रो मुधा भ्रान्तोऽसि रे शुक ! ।४२ (युग्मम्)
सुतारां राक्षसीं वीक्ष्य हरिश्चन्द्रो व्यचिन्तयत् ।
कस्यचिद्दम्भिनो वृत्तं नेदं देवीविजृम्भितम् ॥ ४३ ॥
किं तु मत्कर्मघोरत्वं प्रसरत्यनिवारितम् ।
यत्करिष्यति दैवं तन्मया सर्वं सहिष्यते ॥ ४४ ॥
उशीनरमहीपालपुत्रि ! पावित्र्यदर्शने ! ।
सुतारे ! ते नमः कीरः सप्रणाममदोऽवदत् ॥ ४५ ॥

अरे निषादभृतक ! हरिश्चन्द्रोऽसि सत्यतः ।
इयं ते गृहिणी सम्यगित्यपृच्छद् महीपतिः ॥ ४६ ॥
नाहं राजन् ! हरिश्चन्द्रो नेयं प्राणप्रिया मम ।
तिर्यग्योनित्वतः किञ्चिच्छुको वक्ति यथा तथा ॥ ४७ ॥
शुकं प्रत्याह राजाऽथ किमस्मान् वञ्चयस्यरे ! ? ।
तस्मादियमिव त्वं रे ! वध्यो वन्ध्यगिरो गिरन् ॥ ४८ ॥
शुकोऽप्यूचे च्युता राज्याद्वैरिवेश्मविहारिणः ।
नात्मानं हि प्रकाशन्ते सहन्ते विपदां पदम् ॥ ४९ ॥
तस्यादेशाद् हरिश्चन्द्रः खरे तामध्यरोपयत् ।
अभीष्टार्थेऽपि किं कुर्यात् परायत्तो विचक्षणः ? ॥५०॥
सुतारैषा हरिश्चन्द्रो यदुभौ स्तो न भूपते ! ।
दह्यादेहं ममार्चिष्मान् सत्यं चेदस्तु वारिवत् ॥ ५१ ॥
प्रतिज्ञामिति कृत्वाऽथ मन्त्रिणा रचितां चिताम् ।
झम्पां दत्त्वा शुकोऽविक्षदक्षताङ्गो विनिर्ययौ ॥ ५२ ॥
मन्त्र्यूचे देव ! मन्येऽहं किञ्चिन्मान्त्रिकवैशसम् ।
आकृत्या सुन्दराकारा सम्भाव्या राक्षसी कथम्?॥५३॥
इत्युक्ते तेन भूमीशो रासभादुदतारयत् ।
किं कुर्मः, कर्म केनापि निर्मितं मर्मवेधकम् ? ॥ ५४ ॥
इति कोपानुतापाभ्यां संपृक्तः काश्यपीपतिः ।
मान्त्रिकं व्यसृजत् कीरं पञ्जरेऽपि न्यधापयत् ॥५५॥
हरिश्चन्द्रोऽपि चण्डालनिदेशाद्दिवसात्यये ।
श्मशानं रक्षितुमसावाययौ सात्त्विकाग्रणीः ॥ ५६ ॥
क्वचिद्रक्षोगणाकीर्णं क्वचिद्योगीन्द्रसेवितम् ।
क्वचित्फेरण्डफेत्कारं क्वचिद्भूतविभीषणम् ॥ ५७ ॥
क्वचिद्विभीषिकाभीष्मं श्मशानं स परिभ्रमन् ।
रुदतीं सुदतीं काञ्चिद् हरिश्चन्द्रो व्यलोकयत् ॥ ५८ ॥

ऊचे च सुतनो ! किं ते परिदेवनकारणम् ? ।
मोचे गत्वा पुरः पश्य न्यग्रोधं, स तथाऽकरोत् ॥५९॥
ऊर्ध्वपादमधोवक्त्रं वटशाखावलम्बिनम् ।
नरमेकं निरैक्षिष्ट सर्वलक्षणलक्षितम् ॥ ६० ॥
तन्निरीक्ष्य नृपो दध्यौ प्रादायि मुनये मही ।
मुनिकन्याधनोपाये विक्रीते सुतवल्लभे ॥ ६१ ॥
जीवितस्यापि निर्विण्णो म्रियेऽहं यदि साम्प्रतम् ।
परप्राणपरित्राणकारणाद्भावि मे शुभम् ॥ ६२ ॥
विचिन्त्येति नृपः प्राह कस्त्वं कस्यासि नन्दनः ? ।
अवस्था कथमीदृक्षा, बद्धः किं वटपादपे ? ॥ ६३ ॥
सोऽब्रवीद्देव ! काशीशचन्द्रशेखरनन्दनः ।
विद्याधर्याऽस्मि पल्यङ्कात् समानीतोऽत्र सप्रियः ॥६४॥
मांसेन मे महाहोमं सा करिष्यति निश्चितम् ।
इतस्तरङ्गिणीतीरं गताऽस्ति स्नानहेतवे ॥ ६५ ॥
तमुवाच हरिश्चन्द्रो गच्छ त्वं शाधि मेदिनीम् ।
यत्कार्यं तत् करिष्येऽहं विद्याधर्याः स्वमांसतः ॥ ६६ ॥
प्रत्याह चन्द्रसूनुर्नेदं समीचीनत्वमञ्चति ।
खरस्यायुःक्षये क्वापि म्रियेत रजकः कथम् ? ॥ ६७ ॥
पुनः प्रोवाच भूपो मे प्रार्थनां मा कृथा वृथा ।
इत्युक्त्वा स्थान एतस्य स्वं बबन्ध तरोरधः ॥ ६८ ॥
सकलत्रः स वेगेन प्रययौ चन्द्रनन्दनः ।
अथागाल्ललना व्योम्नि दधाना साऽऽर्द्रचीवरम् ॥६९॥
उत्क्षिप्योत्क्षिप्य भूमीशो निजमांसं समार्पयत् ।
विद्यासिद्धिनिमित्तं सा चिक्षेपाग्नौ यथाविधि ॥ ७० ॥
इतो गोमायुफेत्कारः कुण्डकं परितोऽभवत् ।
आदिशत् खेचरं साऽथ विलिक्षा तस्य रक्षणे ॥ ७१ ॥

बेनासौ वार्यमाणोऽपि समीपे मत्युताभवत् ।
अजागाराश्रममुनिस्तत्रागाद्वायुवद् द्रुतम् ॥ ७२ ॥
अरे ! किमेतदारब्धं गदतीति महामुनौ ? ।
भीता विद्याधरी कापि ननाश सपरिच्छदा॥ ७३ ॥
शाखाबद्धं नृपं दृष्ट्वा श्वसन्तं रुधिराविलम् ।
उपलक्ष्याथ कौटिल्यस्तमौषध्याऽकरोन्नवम् ॥ ७४ ॥
इतश्च—अरे ! क त्वं गतोसीति शब्दितः श्वपचेन सः ? ।
उपसृत्य श्मशानान्तं शुश्राव करुणध्वनिम् ॥ ७५ ॥
हा पुत्र ! क गतोऽसीति मूर्च्छन्तीं हरिणीदृशम् ।
विलोक्य भूपतिः प्राह कस्मात्ते नन्दनो मृतः ? ॥७६॥
साऽब्रवीद्देव ! पत्न्यस्मि हरिश्चन्द्रमहीभुजः ।
रोहिताश्वाभिधानोऽयं नन्दनो नेत्रनन्दनः ॥ ७७ ॥
मम निःक्षीणभाग्याया दष्टः फणभृता सुतः ।
अकृतोपकृतिर्दैवात् सम्प्राप्त ईदृशीं दशाम् ॥ ७८ ॥
हरिश्चन्द्रो रुरोदाशु धैर्यं कस्य सुतव्यये ? ।
आश्लिक्षद् नितरां पुत्रं चुम्बति स्म च मूर्द्धनि ॥७९॥
रुष्टोऽसि वारितो वाऽसि किं नु यच्छसि नोत्तरम् ? ।
न मां प्रत्यभिजानासि चिरकालसमागमात् ॥ ८० ॥
इतश्च श्वपचः प्राह किमारेभेऽनया समम् ? ।
आनयार्भकवासांसि स्वाचारे को विलम्बते ? ॥८१॥
इति चण्डालवाक्यानि दुःश्रवाणि निशम्य सः ।
भूत्वा पराङ्मुखोऽशक्तो याचितुं स्फुटया गिरा ॥८२॥
आदित्सयाऽऽच्छादनस्य विच्छायवदनद्युतिः ।
करं प्रसारयामास हरिश्चन्द्रो, हहा ! विधिः ॥ ८३ ॥
इतश्च विदधुः पुष्पवृष्टिं पीयूषभोजिनः ।
अहो ! सत्त्वमहो ! सत्त्वमिति व्याहारचारवः ॥ ८४ ॥

ततोऽयोध्यापुरीसंस्थमात्मानं दृष्टवान् नृपः ।
सेवितं गुरुवच्छिष्यैर्वसुभूत्यादिसेवकैः ॥ ८५ ॥
यावच्च विस्मयस्मेरः किञ्चिद् ध्यायति भूपतिः ।
तावत्तत्र क्षणात् मासत्रिदशस्तमवोचत ॥ ८६ ॥
न वयं तापसा राजन् ! नैते निकृतिवञ्चने ।
किं त्वस्माभिः कृतं सर्वं तव सत्त्वपरीक्षणे ॥ ८७ ॥
शक्रः स्वयं महीशक्र ! चक्रे सत्त्वस्तुतिं तव ।
सभामण्डपमासीनो वाचा धीरप्रशान्तया ॥ ८८ ॥
हरिश्चन्द्रो नृपः सत्त्वाद् न देवैरपि चाल्यते ।
आपन्नेऽपि निजप्राणसंशयेऽपि कदाचन ॥ ८९ ॥
अश्रद्धेयं वचः श्रुत्वाऽस्माभिरीदृग् विचेष्टितम् ।
तत्क्षन्तव्यं, महात्मानो विनम्रे हि कृपालवः ॥ ९० ॥
सत्त्वेन भवतस्तुल्यो नास्त्यन्यस्त्रिजगत्यपि ।
तमःस्तोमापहः कोऽपि किं सूर्यादतिरिच्यते ? ॥९१॥
स्तुत्वेति जगतीनाथं नत्वा योजितपाणयः ।
दिवौकसो दिवं जग्मुस्तत्प्रशंसापरायणाः ॥ ९२ ॥
अन्येद्युर्बहिरुद्याने गतः क्षोणीपतिः स्वयम् ।
तीर्थं शक्रावताराख्यं जीर्णं शीर्णं व्यलोकयत् ॥९३॥
वसुभूतिरुवाचाथ ज्ञात्वा चेतो महीभुजः ।
इङ्गिताकारतत्त्वज्ञा मन्त्रिणः सर्ववेदिनः ॥ ९४ ॥
वृषभस्वामिनो बिम्बं भासुरं शक्रनिर्मितम् ।
इदं शक्रावताराख्यं महातीर्थं महीतले ॥ ९५ ॥
कालक्रमादिदं जीर्णं बभूव क्षितिनायक ! ।
उद्धारकारिणो यस्मात् प्रभवन्ति भवादृशाः ॥ ९६ ॥
भवानप्यादिमजिनसन्ताने समजायत ।
कुरुष्वेदं नवं तीर्थं देहिनं रसवेदिवत् ॥ ९७ ॥

भरतेशादित्ययशःप्रभृतीनां महीभुजाम् ।
स्वपूर्वजानामाख्याभिः ख्याताः स प्रतिमा व्यधात् ९८
अमारिपूर्वकं भूरिदानसम्प्रीणितार्थि च ।
प्रतिष्ठां कारयामास चैत्योद्धारमकारयत् । ९९ ॥
सम्यक्त्वं निर्मलं बिभ्रद् विदधानः प्रभावनाम् ।
कालक्रमेण शुद्धात्मा देवभूयमगादयम् ॥ ५०० ॥
अथोवाच बलः स्वामिन् ! तद्दृष्टान्तश्रुतेर्मम ।
अमन्दानन्दकन्दल्याः प्रमोदः समपद्यत ॥ १ ॥
एकं सर्वरसस्यन्दि हरिश्चन्द्रनिदर्शनम् ।
परं यौष्माकनिःसीमवचोडम्बरगौरवम् ॥ २ ॥
केचिद् मृता अपि जनाश्चरित्रैश्चित्रकारिभिः ।
जीवन्त इव जायन्ते कीर्त्तिरेवाविनश्वरी ॥ ३
ततोऽयोध्यासमायातविद्याभृत्प्रियमोत्सवम् ।
विदधुर्जृम्भका देवाः प्राक्तनभवबान्धवाः ॥ ४ ॥
अथ राजाऽपि सूरीणां प्रणिपत्य पदद्वयीम् ।
धर्मकर्मप्रवीणात्मा जगाम सदनं निजम् ॥ ५ ॥
अन्यद्युर्धारिणी देवी सुखसुप्ता महासती ।
शान्तं कान्तं मृगाधीशं प्रविशन्तं मुखाम्बुजम् ॥ ६ ॥
विलोक्य निद्राविच्छेदे स्मृत्वाऽभीष्टं जिनेश्वरम् ।
स्थित्वा वेत्रासने चित्रे निशाशेषमवाहयत् ॥ ७ ॥ (युग्मम्)
प्रभाते धारिणी देवी महास्वप्नं महीभुजः ।
अचीकथद् महोत्साहक्षीरवार्द्धीन्दुमण्डलम् ॥ ८ ॥
विचार्यासौ महास्वप्नमेतस्या न्यगदत् पुरः ।
प्रवीरो जगदुत्कृष्टो भविता तनयस्तव ॥ ९ ॥
अथावर्द्धत धारिण्या गर्भो वाञ्छाद्रुमाम्बुदः ।
दानपूजादिकृत्येषु भावश्चास्य प्रभावतः ॥ १० ॥

पाणिना विधृतं सख्या अपास्य मणिदर्पणम् ।
कौक्षेयकेषु धौतेषु धारिणी मुखमैक्षत ॥ ११ ॥
एणनाभिमपास्योच्चैर्विलासमकरीकृते ।
दन्तावलमदं देवी प्रग्रहीतुं प्रचक्रमे ॥ १२ ॥
तस्यां गर्भप्रभावेन दोहदा हृत्प्रमोददाः ।
पर्यपूर्यन्त भूपेन लतायां मधुना यथा ॥ १३ ॥
क्रियमाणेषु सर्वत्र शान्तिकेषु महर्षिभिः ।
रक्षाभूतिषु धारिण्या बध्यमानासु दोर्युगे ॥ १४ ॥
घटीतात्पर्ययुक्तेषु निविष्टेषु द्विजेष्वपि ।
सूतिकर्मप्रवीणासु तल्लीनासु पुरन्ध्रिषु ॥ १५ ॥
परिपूर्णेषु मासेषु सार्धाष्टमदिनेष्वपि ।
असूत धारिणी पुत्रं राजनीतिर्यथा धनम् ॥ १६ ॥
(त्रिभिर्विशेषकम्)
सर्वातिशायिशोभाऽऽढ्यं तदानन्दकृतं शुभम् ।
मङ्गल्यदीपैरखिलैः सूतिवेश्म तदा बभौ ॥ १७ ॥
यथाविधि व्यतिक्रान्ते षष्ठीजागरणोत्सवे ।
मानयित्वा निजं ज्ञातिमित्रवर्गमनुद्धतः ॥ १८ ॥
गुरुलोकं समभ्यर्च्य मोचयित्वाऽरिबन्दिनः ।
दशमेऽह्नि बलोऽस्याख्यां महाबल इति व्यधात् ॥१९॥
स्वाङ्गैरिव तदाकारैस्तदा जातैः स्तनन्धयैः ।
अन्वीयमानः सततं बलमनुर्व्यवर्धत ॥ २० ॥
पञ्चस्वितेषु वर्षेषु क्षीरकण्ठो महाबलः ।
पपाठ सकला विद्याः पूर्वाधीता इवाऽञ्जसा ॥२१॥
कृतज्ञो विनयी धीरः परनारीसहोदरः ।
भविष्यत्तीर्थकृन्नामजीवानां लक्षणं त्विदम् ॥ २२ ॥
सम्यग्दर्शनलाभस्य विरहेऽप्येष शुद्धधीः ।
अयत्नमपि किं जात्यरत्नं रत्नैः समं परैः ? ॥ २३ ॥

सारस्वतमिवोद्दाम्यकामविभ्रमवाङ्मये ।
कामिनीमदजीवातुर्यौवनं समुपागतः ॥ २४ ॥
कमलश्रीप्रभृतिकाः कन्यकाः काश्यपीभुजा ।
शतानि पञ्चैकदिने कुमारः पर्यणाय्यत ॥ २५ ॥
( युग्मम् )
तस्याऽऽसन् बालमित्राण्यचलो धरणपूरणौ ।
वसुर्वैश्रवणश्चाभिश्चन्द्र इत्यभिधानतः ॥ २६ ॥
षड्भिर्मित्रैरमीभिः स वर्षक्षोणीधरैरिव ।
अधिकाधिकलक्ष्मीकैर्जम्बूद्वीप इवाऽद्युतत् ॥ २७ ॥
कदाचित् खेलयामास गजानैरावतायितान् ।
शक्रवद् विबुधैः साकं तच्चित्रं यद् बलाङ्गजः ॥२८॥
कदाचिदुद्यानगतो वृतो मित्रैर्गुणैरिव ।
चिक्रीड विविधैः क्रीडाचक्रैर्वक्रेतराशयः ॥ २९ ॥
कदाचिदुच्चैःश्रवसः सोदरान् भूगतानिव ।
लातपातस्फुरद्धौर्यवर्यान् सोऽश्वानवाहयत् ॥ ३० ॥
कदाचिच्चित्रकाव्यानां रहस्यानि व्यचारयत् ।
एकस्थानधियाऽऽसीनैरसैः सर्वैरिव स्थितैः ॥३१॥
न सीदति यथा धर्मो नाऽर्थो याति क्षयं यथा ।
यथा न तरलायन्ते बाह्याभ्यन्तरवैरिणः ॥ ३२ ॥
यथा न स्थानविन्यस्तः प्रकृत्योघो विरज्यते ।
संसाराशेषसर्वस्वमन्वभूद् भूपभूस्तथा ॥३३॥(युग्मम्)
एवं संसारकल्पद्रोर्बुभुजे विषयावलीम् ।
भाविनस्तीर्थकृज्जीवा भावदेवा इवाऽवनौ ॥३४ ॥
अन्येद्युर्बलबोधाय पुनारत्नेन्दुसंयमी ।
इन्द्रकुब्जे महोद्याने स्थितवान् शमतानिधिः ॥ ३५ ॥
प्रत्येकबुद्धं निर्ग्रन्थं श्रुत्वोद्यानसमागतम् ।
भवे संजातवैराग्य इति दध्यौ बलो नृपः ॥ ३६ ॥

अलं मे पुत्रमित्रादिसुखैः क्षणविनश्वरैः ।
अलं मे संपदा कुम्भिकर्णतालविलोलया ॥ ३७ ॥
अलं मे भववासेन पाशेनेवाऽन्तरात्मनः ।
ध्यात्वेति सुतमाहूय मन्त्रिणश्चाभ्यधादिदम् ॥ ३८ ॥
वयमत्रैव राजानो यूयमन्त्रयमन्त्रिणः ।
अतो राज्यधुराभारो मयि युष्मास्वत्रास्थितः ॥ ३९ ॥
मयेयं साधिता पृथ्वी भवद्भिः कृतसन्निधैः ।
सुव्रता सौरभेयी यत् तद् गोपालविशेषणम् ॥४०॥
यद् भवन्तो मयैश्वर्यान् खेदिताः शुभकर्मणि ।
यत्तु न्यायेतरं चक्रे भूमिपीठे मदान्ध्यतः॥ ४१ ॥
चालिता जययात्रायै चलता ये निरागसः ।
उन्मूलिता महीपाला वात्ययेव महाद्रुमाः ॥४२॥
विधाय भस्मसाद् ग्रामान् यल्लोका निर्धनीकृताः ।
नश्यद्भीरुकरक्रोडाद् यच्च बाला वियोजिताः ॥४३॥
तदघं क्षालयिष्यामि मलक्लिन्नमिवाऽम्बरम् ।
गृहीत्वा प्रभुपादान्ते संयमं यमिनां मतम् ॥ ४४ ॥
सुते न्यस्यामि राज्यस्य जरसा जर्जरो भरम् ।
प्रदोषकाले पूषेव निजं तेजो हविर्भुजि ॥ ४५ ॥
अमुष्मिन् कवचहरे मयीव नृपसंसदि ।
वर्तितव्यं महाभागाः ! युष्माभिर्मम शिक्षया ॥ ४६ ॥
अथेत्थं मन्त्रिणोऽप्यूचुः स्वामिन्! जातो विरागवान् ।
अन्यथा कथमासन्नमोक्षस्येव वचस्तव? ॥ ४७ ॥
यः श्रेयसि प्रवृत्तानां निषेधो मोहतो भवेत् ।
स शालीनूषरक्षेत्रेष्वारोपयति वप्रतः ॥ ४८ ॥
तथापि पूर्वजा राजन्! वार्धके मुनिव्रताः ।
साम्प्रतं साम्प्रतं तत् ते कृतज्ञत्वं प्रसर्पति ॥ ४९ ॥

इदं राज्यं कुमारेऽस्मिन् यत् त्वया विनिवेश्यते ।
विचार्यं तत्र किञ्चिद् नाऽस्माकमेव भवानिव ॥५०॥
पितुश्च सचिवानां च गिरं श्रुत्वा महाबलः ।
प्रोवाच तातचरणा अप्रसादाः कथं मम? ॥ ५१ ॥
अथोचे जगतीपालो मत्पुत्रोऽसि विवेक्यसि ।
गिरो निराक्रियन्ते मे किमज्ञनेव तत् त्वया? ॥५२॥
ततः पितृगिरः श्रुत्वा महाबलकुमारराट् ।
देवादेशः प्रमाणं मे रात्रिस्वप्नोपदेशवत् ॥ ५३ ॥
असौ निवेशयामास कुमारं संमदोद्धुरः ।
अभिषेकासने शक्रपर्यङ्क इव तीर्थपम् ॥ ५४ ॥
मङ्गल्याऽऽतोद्यमालासु वाद्यमानासु सर्वतः ।
कुमारः सिषिचे मूर्ध्नि भूभुजा तीर्थवारिभिः ॥५५॥
अथ भूमीभुजोऽन्येऽपि सौवर्णकलशैर्नृपम् ।
तमभ्यषिञ्चन् तीर्थेशबिम्बमिव प्रतिष्ठितम् ॥ ५६ ॥
अथोदितं द्वितीयेन्दुमिव नम्रशिरोधराः ।
प्राणमन् नवमुर्वीशमखिला अपि नागराः ॥ ५७ ॥
सदशानि मनोज्ञानि वासांसि श्रीबलाऽऽज्ञया ।
च्युतानीवेन्दुकिरणैः पर्यधाद् नूतनो नृपः ॥ ५८ ॥
चन्दनैश्चन्द्रकान्ताश्मस्यानबिन्दुदकैरिव ।
तस्याऽङ्गरागं सर्वाङ्गं विदधुर्वारयोषितः ॥ ५९ ॥
भूषणैर्भूषितस्तैस्तैर्मुक्तामाणिक्यसंभवैः ।
नवो राजा रराजाऽसौ कल्पद्रुः पल्लवैरिव ॥ ६० ॥
माणिक्यभासुरं रेजे मुकुटं तस्य मूर्धनि ।
उदयाद्रितटे टीकमानं बिम्बं रवेरिव ॥ ६१ ॥
श्रीबलो धारयामास च्छत्रं मूर्ध्नि निवेशितम् ।
क्षीरसागरडिण्डीरपिण्डैरिव विनिर्मितम् ॥ ६२ ॥

---

१ एवमित्यपि ।

चामरैर्वीररामाणामवीज्यत कृतादरैः ।
नवसङ्गकृतोल्लासै राज्यलक्ष्मीहसैरिव ॥ ६३ ॥
विशाले बलभूपालस्तद्भाले लटभभुवि ।
तिलकं रचयामास राज्यश्रीन्यासमण्डलम् ॥ ६४ ॥
ततः श्रीबलभूपालः पालिताऽखिलभूतलः ।
एवं शिक्षां ददौ तस्य नीतिशास्त्रविशारदः ॥ ६५ ॥
वारांनिधिजलोत्पत्तेरिव नीचत्वगामिनी ।
नैकत्रस्थायिनी बेला संक्रान्तव्यसनादिव ॥ ६६ ॥
उद्दाममददात्रीयं सहोत्पन्नद्विपादिव ।
लक्ष्मीर्देवी दुराराध्या वत्स ! राधापतेरपि ॥ ६७ ॥
एतस्या रक्षणे वत्स ! यामिक इव विक्रमः ।
जागरूकस्त्वया कार्यः प्रदत्तन्यायवृत्तिमान् ॥ ६८ ॥
नरो विक्रमवान् वत्स ! सत्त्वेन परिभूष्यते ।
तदेव यत्नतो रक्ष्यं स्वामिदत्तप्रसादवत् ॥ ६९ ॥
ससत्त्वेनाऽपि नाऽऽधेयं प्रचण्डकरताण्डवम् ।
पश्य चण्डकरं लोको न दृशाऽपि विलोकते ॥७०॥
प्रचण्डकरचातुर्ये जायते व्यसनोदयः ।
तस्माद् भ्रश्यति संसारेऽरघट्टीयो वृषो यथा ॥७१॥
सप्तभिर्व्यसनैः सप्तनरकाह्वायकैरिव ।
अन्तरङ्गारिषड्वर्ग उज्जागर्ति नवेश्वरः ॥ ७२ ॥
तदाधीनः पुमान् वत्स ! रज्यते मदनार्थयोः ।
तावपि स्त्रीमृषामूलौ तयोरेषाऽस्त्यवस्थितिः ॥ ७३ ॥
दोषोदयकरी सूरकराणामप्यगोचरी ।
क्षणं रक्ता विरक्ता च नारी सन्ध्येव राजते ॥७४॥
मृषावादात् क्षयं यान्ति प्रतिष्ठाः प्रत्ययाः किल ।
नदीपूरादिव ग्रामाः कोपादिव सुवासनाः॥ ७५ ॥
इति विनयविनम्रं शिक्षयित्वा नरेन्द्रं

नवमभिनवभक्त्या तात्त्विकप्रेमभूत्या ।
बलनृपतिरुदारं मोहतां मोक्तुकामः
सुगुरुचरणसेवालालसोऽगाद् वनान्तः॥५७६॥

इत्याचार्यश्रीविनयचन्द्रविरचिते श्रीमदाचार्यप्रद्युम्नशोधिते श्री-मल्लिस्वामिचरिते विनयाङ्के महाकाव्ये प्रत्येकबुद्धश्रीरत्न-चन्द्रसत्यहरिश्चन्द्रनिदर्शनगर्भितः श्रीबलनृपतिबोध-बन्धुरः श्रीमहाबलराज्याभिषेकोत्सवव्यावर्णनो नाम प्रथमः सर्गः ॥

अर्हम्

# अथ द्वितीयः सर्गः ।

अथ प्रहृष्टसर्वाङ्गः कृतस्नानादिमङ्गलः ।
सहस्रवाह्यां शिबिकामारुरोह बलो नृपः ॥ १ ॥
ददानो विधिवद् दानं भावशुद्ध्या विशुद्धधीः ।
उपेत्योपवनं तस्या उत्ततार भवादिव ॥ २ ॥
उज्झाञ्चकार निःशेषं नेपथ्यादि स्वमोहवत् ।
श्रीरत्नचन्द्रपादाब्जं ववन्दे मोदमेदुरः ॥ ३ ॥
सामायिकमहामन्त्रं सत्रं निर्वाणसंपदाम् ।
राजर्षिर्गुरुवक्त्रेणोच्चचार प्रकटाक्षरम् ॥ ४ ॥
विविधाभिग्रहग्राही निगृहीतकुवासनः ।
अनगारः शमागारो निर्निदानतपःपरः ॥ ५ ॥
विधिवत् पालयित्वाऽथ सुचिरं संयमं यमी ।
जित्वा कर्माणि राजर्षिर्लेभे निर्वाणसंपदम् ॥ ६ ॥
(युग्मम्)

महाबलनरेन्द्रेण सिंहस्वप्नेन सूचितः ।
कमलश्रीमहादेव्यामुदपादि शरीरजः ॥ ७ ॥
भविष्यद्बलभद्रत्वादिति ध्यात्वेव भूभुजा ।
बलभद्राभिधानेनाऽऽहूतः प्रेमकिरा गिरा ॥ ८ ॥
अन्यदा बहिरुद्याने चञ्चच्चम्पकचारुणि ।
वरधर्माभिधः सूरिर्भगवान् समवासरत् ॥ ९ ॥
तदाऽऽगमनमङ्गल्यमाकर्ण्याऽऽरामपालकात् ।
यथेच्छं पीतपीयूषगण्डूष इव सोऽहृषत् ॥ १० ॥
तं नमस्कर्तुमुर्वीशश्चचालाऽचलमानसः ।
पिदधानो वैरच्छत्रैर्दिवं हंसगणैरिव ॥ ११ ॥
दन्तावलैर्बलोद्दामैरभ्रमूवल्लभायितैः ।
तुरङ्गैश्चापि मार्तण्डरथादपहृतैरिव ॥ १२ ॥
रथैः श्रोत्रपथाध्वन्यचारुचीत्कारबन्धुरैः ।
अनन्तैर्भक्तसामन्तैः समन्तात् परिवारितः ॥ १३ ॥
भूवरस्ववधूभ्रान्तिप्रदवारपुरन्ध्रिभिः ।
चामरै रत्नखचितैर्वीज्यमानः पदे पदे ॥ १४ ॥
बन्दिभोगावलीपाठस्पर्धाप्रसृमरैरिव ।
नादैर्मङ्गलतूर्याणां पिदधन् रोदसीतलम् ॥ १५ ॥
धर्मातन्त्रैर्वृतो मित्रैः षड्भिर्लक्ष्मीविकस्वरैः ।
पदातिभिश्च पारीन्द्रप्रौढविक्रमविश्रुतैः ॥ १६ ॥
गजेन्द्रस्कन्धमारूढः प्रौढप्रसृतभावनः ।
तदुद्यानमथ प्राप नन्दनं वासवो यथा ॥ १७ ॥

( सप्तभिः कुलकम् )

दूरादेवाऽवनीनाथः करिस्कन्धाद् मदादिव ।
उत्तीर्य राजचिह्नानि पञ्चाऽमुञ्चत् समाहितः ॥ १८ ॥

---

१ नवच्छत्रैरिति पाठान्तरम् ।

क्रोधाऽन्धकारमार्तण्डं मानाऽचलपविभ्रमम् ।
मायावल्लीतुषारार्भ लोभाऽम्भोधिघटोद्भवम् ॥१९॥
आरामं साम्यवल्लीनामभिरामं महाव्रतैः ।
आत्मारामं महासत्त्वं मुक्तरामं विरागतः ॥ २० ॥
लब्धिरत्नाकरं श्रीमज्जिनधर्ममिवाऽङ्गिनम् ।
वरधर्माख्यमाचार्यमद्राक्षीत् क्षितिनायकः ॥ २१ ॥
( त्रिभिर्विशेषकम् )

अथ प्रदक्षिणीकृत्य मुनिनाथं जिनेन्द्रवत् ।
पुलकच्छद्मना बिभ्रद् भक्तिं मूर्तां ननाम तम् ॥२२॥
कांश्चित् पद्मासनाऽऽसीनान् कांश्चिद् वज्रासनस्थितान् ।
कांश्चिद् वीरासनस्थांश्च कांश्चन बर्हणाश्रितान् ॥२३॥
कांश्चिद् भद्रासनासीनान् कांश्चिद् दण्डासनाश्रितान् ।
कायोत्सर्गस्थितान् कांश्चिद् कांश्चिद् हंसासनश्रितान् ॥
कांश्चन शीलाङ्गरथपरावर्तनतत्परान् ।
कांश्चिदक्षैर्विनिक्षिप्तैर्भङ्गान् गणयतो भृशम् ॥२५॥
कालानुष्ठाननिष्ठांस्तांस्तन्वानान् बहुशोऽपि कान् ।
सिद्धान्तवाचिकाः कांश्चित् कुर्वाणान् परया मुदा ॥२६॥
पात्रलेपपरान् कांश्चित् कांश्चिद् मौनमुपागतान् ।
शैक्षान् शिक्षयतः कांश्चित् कांश्चन पठतः पदः ॥२७॥
कांश्चित् कर्मप्रकृत्यादिविचारग्रन्थनिर्णयम् ।
कुर्वाणांश्चूर्णिभाष्यादेः पदव्याख्याप्रकाशनैः ॥२८॥
कांश्चित् प्रकरणान्युच्चैर्नूतनानि प्रकुर्वतः ।
वन्द्यान् ववन्दे निर्ग्रन्थांस्त्रिविधं काश्यपीपतिः ॥२९॥
(अष्टभिः कुलकम्)

अथोपेत्य वनं सूरिं प्रणम्य प्रमदान्वितः ।
मित्रैः साकमुपाविक्षत् चक्रे च विनयाञ्जलिम् ॥३०॥

१ मूर्ध्नेत्यपि ।

अथो दन्तांशुभिः शुभ्रैर्ज्योत्स्नाव्यतिकरैरिव ।
सौधवच्छुभ्रयन् भव्यानुवाचेदं महामुनिः ॥ ३१ ॥
चतुर्गतिकसंसारक्षारवारांनिधाविव ।
पोतोपमानाश्चत्वारो धर्मा दानादिका अमी ॥ ३२ ॥
तेषां मध्याद् दानधर्मः पृथक्कृत्य वितन्यते ।
यः सिषेवे जिनाधीशैरावर्षं हर्षवर्षिभिः ॥ ३३ ॥
सर्वेषामपि जीवानां देहः सुकृतसाधनः ।
पुद्गलैः स तु निष्पन्न आहाररससंभवैः ॥ ३४ ॥
आहारैः प्रासुकैर्ये तु दानं ददति साधवे ।
ते सौख्यभाजिनो राजन्! भवन्ति जिनदत्तवत् ॥३५॥
तथाहि पुष्करद्वीपे पुरी चन्द्रकलाह्वया ।
अभिधानविधानाभ्यां तत्र राजा परन्तपः ॥ ३६ ॥
तस्य सोमायशोवत्यौ हरस्येवाऽद्रिजह्नुजे ।
अमेयरूपलावण्ये पट्टदेव्यौ बभूवतुः ॥ ३७ ॥
पद्मशेखर आद्यायाः सोमायाः सूर इत्यपि ।
विमातृजावपि प्रीत्या तौ पुत्रौ युग्मजातवत् ॥३८॥
युगपज्जाग्रतोस्तुल्यहर्षयोस्तुल्यशोकयोः ।
आजन्माऽजायत प्रीतिरेतयोर्नेत्रयोरिव ॥ ३९ ॥
अन्येद्युः सोमयाऽध्यायि सपत्नीजेऽत्र जीवति ।
कथं मामकपुत्रस्य राज्यं सूरस्य संभवि ? ॥ ४० ॥
सापत्नेयश्च रोगश्च नोपेक्ष्यौ हितमिच्छता ।
मूलादेव समुच्छेद्यौ विषवृक्षाविवोद्गतौ ॥ ४१ ॥
विचिन्त्येति महादेवी सोमाऽलीकप्रकोपना ।
वासागारे निलीयाऽस्थाद् मेघच्छन्नेन्दुकान्तिवत् ॥४२॥
प्रमादवशतो भ्रष्टविद्यां विद्याधरीमिव ।
सोमां वीक्ष्य नृपोऽप्यूचे प्रेममन्थरया गिरा ॥ ४३ ॥
उत्तरायणतिग्मांशुबिम्बवद् वदनं तव ।

गततेजः कथं जातं सोमे ! सोमवरानने !? ॥४४॥
त्वाज्ञाखण्डनं मोहाद् मादृशेन विनिर्मितम् ?।
यदेवं कोपसंस्त्याये मोहभित्तिघने स्थिता ॥ ४५ ॥
अथाऽभ्युवाच भूपालं सोमा श्यामास्यमण्डला ।
चित्तेन धर्तुं नो वक्तुं शक्यते यत् तदाऽभवत् ॥४६॥
अथो निर्बन्धतः पृष्टा दत्त्वोच्चैः शपथावलीम् ।
हृतनिःशेषसारेव साऽप्यूचे गद्गदाक्षरम् ॥ ४७ ॥
तव वल्लभपुत्रेण पद्माख्येन स्मरान्ध्यतः ।
अभ्यर्थिता कृतस्नेहं मदोपे कुलरेणुना ॥ ४८ ॥
निशम्येदं महीपालः कोपाटोपं विनिर्ममौ ।
युक्तियुक्तं वचो नैतदविचार्येति चेतसा ॥ ४९ ॥
आहूय चण्डनामानमङ्गरक्षं निशागमे ।
मारणीयो नवैर्मारैर्भवता पद्मशेखरः ॥ ५० ॥
इत्यादेशं नृपो दत्त्वा त्यक्तोद्गारमिव क्रुधम् ।
सौख्यभागी बभूवाशु कोपान्धानां कुतो मतिः? ॥५१॥
चण्डाङ्गरक्षकः सोऽथ लब्ध्वाऽऽदेशं सुदुःश्रवम् ।
विजने कथयामास पद्मस्य पुरतोऽखिलम् ॥ ५२ ॥
अश्रद्धेयमिदं श्रुत्वा कुमारो हृद्यचिन्तयत् ।
अप्रसादः कुतस्तातपादैर्मम विनिर्ममे ? ॥ ५३ ॥
पप्रच्छ चण्डमुर्वीशनन्दनः किमु कारणम् ? ।
भवानाकारभावज्ञो दैवज्ञ इव वर्तते ॥ ५४ ॥
चण्डोऽवदद् विमातुस्ते मन्ये कपटनाटकम् ।
नृपेङ्गितात्, क्रियातत्त्वं प्रत्ययादिव पण्डितः ॥ ५५ ॥
ततोऽनया स्फुटं कृत्वा कूटं किञ्चित् कठोरया ।
व्यामोहितो महीपालश्छाया लेखनया यथा ॥५६॥
जगन्मोहनिदानाय दुर्लक्षाय बुधैरपि ।
विवेकिजनमुक्ताय स्त्रीवृत्ताय नमोनमः ॥ ५७ ॥

सुस्नेहपात्रसंस्थायिदीप्ता दीपशिखा यथा ।
मलिनी तनुते लोललोचना निजमाश्रयम् ॥ ५८ ॥
एवं विभाव्य शुद्धात्मा विमुच्य नगरं निजम् ।
उत्तराशामुचराशः प्रतस्थे पद्मशेखरः ॥ ५९ ॥
व्याधव्याहतसारङ्गशून्यभ्राम्यन्मृगीकुलाम् ।
विलोक्यमानपारीन्द्रपादां पांशुलभूमिषु ॥ ६० ॥
नाहलैर्वृद्धगोष्ठीकैर्भज्यमानपशुव्रजाम् ।
वंभ्रम्यमाणनिस्त्रासयोगिनीशतसङ्कुलाम् ॥ ६१ ॥
कापालिकजनारब्धघोरमन्त्रप्रसादनाम् ।
निशम्यमानशार्दूलक्रूरफूत्कारदारुणाम् ॥ ६२ ॥
भववद् विपुलाकारां प्रेतभर्तुः प्रियामिव ।
दिनैः कतिपयैः पद्म आपपात महाटवीम् ॥ ६३ ॥
( चतुर्भिः कलापकम् )

इतश्च पन्नगः कोऽपि नीचैःकृतमहाफणः ।
दैवदग्ध इव श्यामो ददृशे तेन मार्गगः ॥ ६४ ॥
मन्दं मन्दं जगादाऽसाविति मानुष्यभाषया ।
कुमारवर ! मां पाथस्तृषार्तं पाययाऽधुना ॥ ६५ ॥
अन्यथा मम जीवद्रुः शोषं यास्यति सत्वरम् ।
खिन्नेषु दुःखितेषूच्चैर्महात्मानः कृपापराः ॥ ६६ ॥
पश्चात् तव करिष्यामि परामुपकृतिं सखे ! ।
विस्मरिष्यसि न त्वं मां मनस्याऽऽहितया यया ॥६७॥
ततः कुमारः संप्राप्य नीरं तीरवतीभवम् ।
पन्नगं पाययामास नलिनीनालचर्यया ॥ ६८ ॥
अथाभवदसौ वेगाद् दिव्यरूपधरो नरः ।
दधानः कराजीवे चारु काञ्चनपङ्कजम् ॥ ६९ ॥
आहस्य करपादेन पद्मोऽसौ वामनीकृतः ।
अहो ! तस्योपकारस्योपकृतं तेन पापिना ॥ ७० ॥

अहो ! अस्य कठोरत्वं कुलिशेनेव निर्मितम् ।
अहो ! अस्य द्विजिह्वत्वं यथार्थमिव लक्ष्यते ॥७१॥
विमृश्येत्यचलत् पद्म उत्तरां प्रति सत्वरम् ।
इतश्चैक्षिष्ट निश्छिद्रां रजोराजीं प्रसर्पिणीम् ॥ ७२ ॥
शृणोति स्म तुरङ्गाणां स्फुरत्खुरपुटारवम् ।
जयश्रीकरकेयूरतारठात्कारसुन्दरम् ॥ ७३ ॥
अस्त्राणि दीप्यमानानि दिवाकरकरोत्करैः ।
दृष्टवानवनीनाथसूनुः सौर्यस्पृहा इव ॥ ७४ ॥
उपलक्ष्य स्वकीयं तद् बलं बलवदाकुलम् ।
अपृच्छत् सादिनं कश्चिद् नामतः प्रकटाक्षरम् ॥७५॥
अथाऽसौ न्यगदच्चन्द्रकलायां पुरि भूपतिः ।
परन्तपः सुतस्तस्य पद्मशेखरनामकः ॥ ७६ ॥
मर्यादास्तम्भमुन्मूल्य महान् मत्त इव द्विपः ।
देवीं यशोमतीं कामात् प्रार्थयामास पद्मकः ॥७७॥
अग्राह्यनामा नष्टः स चण्डकादङ्गरक्षकात् ।
तस्मादिदं बलं भद्र ! प्रेषितं दिक्षु सर्वतः ॥ ७८ ॥
अन्यच्च मामकं नाम कथं विज्ञातवानसि ? ।
पद्मोऽप्युवाच त्वद्वस्त्राञ्चलाऽक्षरविलोकनात् ॥७९॥
ततः पद्मो महाटव्या निःससार भवादिव ।
भुजङ्गकृतसर्वस्वं चिन्तयन् जीवनौषधम् ॥ ८० ॥
तस्या विनिर्गतः पद्मः प्राप शोभापुरं पुरम् ।
इतश्च चण्डो मार्तण्डो नभोमध्यं व्यगाहत ॥ ८१ ॥
नखम्पचासु धूलीषु दुःसञ्चारेषु वर्त्मसु ।
विभ्राणेष्विव निक्षिप्तकारीषानलविभ्रमम् ॥ ८२ ॥
हर्षादध्ययनस्थानाद् गृहीत्वा पुस्तिकावलीम् ।
बठरच्छात्रवर्गेषूत्थितेषु निजकासनात् ॥ ८३ ॥
मार्गश्रमपरिश्रान्तः क्षुधाक्षामकडेवरः ।

सुष्वाप सहकारस्य च्छायायां पद्मशेखरः ॥ ८४ ॥
इतश्चागत्य तत्पादाङ्गुष्ठं चक्रकलप्रभम् ।
अचालयत् कराग्रेण नरः कश्चिद् महामनाः ॥ ८५ ॥
अथ निद्रां परित्यज्योपाविक्षत् पद्मशेखरः ।
कस्त्वं भवान् कथं निद्राविद्रावणपरोऽसि मे ?॥८६॥
सोऽप्युवाच महाभाग ! पुरं शोभापुराभिधम् ।
अत्रास्ति भूपतिः सोमः सोमान्वयविभूषणम् ॥८७॥
तस्याहं सचिवाधीशः सुबुद्धिर्नाम सन्मते ! ।
मम राज्यभरं राजा न्यस्तवान् धुर्यवाच्चिरम् ॥८८॥
भद्र ! सोमनृपो देवादाक्रान्तोऽस्ति रुजा भृशम् ।
यत्र मन्त्र इवाऽकर्णे निष्फला औषधक्रियाः ॥८९॥
दुश्चिकित्स्यनृपव्याधिवीक्षणाच्चिन्तयाऽऽकुलः ।
अहं निर्गमयामास दिनं संवत्सरोपमम् ॥ ९० ॥
निशायामद्य निद्राणे मयि काचन देवता ।
एवमादेशयामास मा मा चिन्तातुरो भव ॥ ९१ ॥
यः प्रातः सहकारस्य च्छायायां मार्गखेदतः ।
शयितं वीक्षसे राज्ये तं भद्र ! विनिवेशयेः ॥ ९२ ॥
पद्मशेखर इत्यस्य नाम स्थामयनोहरम् ।
यस्माद् राज्यश्रियो वृद्धिः संभविष्यति निश्चितम्॥९३॥
सत्याकर्तुमहं मन्ये भवदागमनोत्सवः ।
समायातोऽसि नो भाग्यैः पाहि राज्यमखण्डितम्॥९४॥
ततः पद्मो निजं दृष्ट्वा वपुर्नैसर्गिकाकृति ।
अचिन्तयदहो ! कीदृक् पुण्योदयविजृम्भितम् ?॥९५॥
अथ राज्येऽसकौ न्यस्तो भूपोऽभूत् पद्मशेखरः ।
पुण्यानि सहचारीणि विदेशेऽपि महात्मनाम् ॥९६॥
इतश्च तत्रैव पुरे परकर्मोपजीवकः ।
महोदराख्यया ख्यातः समभूत् कुलपुत्रकः ॥९७॥

विज्ञातनिष्फलोपायोऽसुकृताद्वैतमावहन् ।
उपवासान् वितन्वानः पद्मदेव्याः पुरोऽपतत् ॥९८॥
महाशक्त्योपवासेषु कृतेषु निशि देवता ।
प्रादुरासीत् पुरस्तस्य दीप्यमाना तनुद्युता ॥ ९९ ॥
वरं वृणु महाभाग ! तुष्टाऽहं तव साहसात् ।
सुस्वप्नेक्षणवद् मोघं नाऽस्माकं दर्शनं यतः ॥१००॥
यदि तुष्टाऽसि पद्मेशे ! स्वर्णलक्षं प्रयच्छ मे ।
अन्यथा मम वाञ्छाद्रुर्गतमूलः पतिष्यति ॥१०१॥
स्मित्वा पद्मेश्वरी प्रोचे स्वर्णलक्षं न संनिधौ ।
ममास्ति भद्र ! किन्तूच्चैरुपायं दर्शयामि ते ॥१०२॥
अथाभ्यधादसौ देवीमुपायं प्रकटीकुरु ।
न किं कलान्तराकृष्टाद् वित्ताद् वित्तमुपार्ज्यते?॥१०३॥
गृहाण पुरुषाकारं नरं मृत्स्नामयं तनु ।
दारिद्र्यमस्य नामेति दुःस्थितादयितान्वितम् ॥१०४॥
स्मित्वा स्मित्वाऽवददसौ देवि ! प्रणतवत्सले ! ।
दारिद्र्यस्य प्रसादेन प्राप्त एतादृशीं दशाम् ॥१०५॥
अनेन निधनेनेव न मे कार्यं कदाचन ।
यास्यामि निजसंस्त्यायं लाभो मम तपस्यभूत् ॥१०६॥
पुनरप्यवदद् देवी कश्चिदेनं विनिश्चितम् ।
ग्रहीता स्वर्णलक्षेण दधानः सत्त्वमद्भुतम् ॥ १०७ ॥
नो चेत् तुभ्यं प्रदास्यामि स्वर्णलक्षमसंशयम् ।
पुत्रस्येव तवानेन न कुर्वे विप्रतारणम् ॥ १०८ ॥
आदेशप्रमितिर्मेऽस्तु निगद्येति स पूरुषः ।
दारिद्र्यपुरुषं मूर्ध्नि न्यस्याऽस्माद् निरगाद् नरः॥१०९॥
किमिदं लभ्यते भद्र ! पृष्टे सति पुरीजने ।
दारिद्र्यं स्वर्णलक्षेण प्राप्यते दयितान्वितम् ॥११०॥
हा ! पाप ! पाप ! हा ! तापकारणं सुखवारणम् ।

गृहीतं किमिदं गाढक्रोशायैतत् क्रयाणकम् ? ॥१११॥
इत्थं पौरजनोद्गीर्णं शृण्वानो वाक्यताण्डवम् ।
पर्यभ्राम्यदसौ पुर्यां भूतार्त इव सर्वतः ॥ ११२ ॥
परिभ्राम्यन् परिभ्राम्यन् राजसौधमसौ गतः ।
इतश्च तं गवाक्षस्थो वीक्षाञ्चक्रे क्षितीश्वरः ॥११३॥
तमाश्वाकारयामास मूर्तव्यसनचक्रवत् ।
सोऽप्यागत्य प्रणत्यैनं बभाषे योजिताञ्जलिः ॥११४॥
देवैतद् देवतादत्तं दारिद्र्यं पुरुषाकृति ।
न केनापि गृहीतं तद् दधता सत्त्वमद्भुतम् ॥ ११५ ॥
अस्मिन् सत्त्वविनिर्मुक्ता वसन्ति पुरवासिनः ।
असात्त्विकं पुरं सर्वमिदं स्वामिन् ! त्वया विना ।११६॥
इत्थं तस्य वचः श्रुत्वा बभाषे नरपुङ्गवः ।
अर्पयाऽमुं गृहाण त्वं स्वर्णलक्षं निजं यथा ॥११७॥
गृहीते सति दारिद्र्यपुरुषे धरणीभुजा ।
तद्भयादिव मार्तण्डो ययौ पश्चिमभूधरम् ॥ ११८ ॥
दौर्भाग्यमिव दारिद्र्ये प्रससार तमस्ततिः ।
दूराद् ध्वस्तो दृगालोकः साधुवाद इव द्रुतम् ॥११९॥
इतश्च स्मेरराजीवं दधाना करपद्मयोः ।
लक्ष्मीः प्रादुरभूदग्रे पुण्यक्षीराम्बुधेः सुता ॥१२०॥
देव ! यस्मिन्नयं भद्रः सुखं खेलति कौतुकी ।
अहं तत्र न तिष्ठामि सतीव गणिकौकसि ॥ १२१ ॥
अहो ! विदधताऽङ्केऽहं सत्य आभानकः कृतः ।
ऊर्णायुः प्रज्वलंस्तार्णपार्णौकसि निविक्षिपन् ॥१२२॥
कार्ये किमपि नो कार्यमविचार्य विचक्षणैः ।
प्रत्यक्षेणाऽनुमानेन परीक्षा च विधीयते ॥ १२३ ॥
अविचार्य कृते कार्ये पश्चाद् बुद्धिविचारणम् ।
सेतुबन्धनवद् धिग् धिग् गतपाथसि भूयसि ॥१२४॥

इत्थमुक्त्वाथ देवी श्रीर्निर्ययौ राजवेश्मनः ।
इतश्चागाद् नरः कोऽपि पुरस्तात् पृथिवीपतेः ॥१२५॥
अथाभ्युवाच भूपालः कस्त्वं कस्मात् समागतः ?।
सोऽप्यूचे देव! दानाख्यं पुरुषं मां विचिन्तयेः ॥१२६॥
यत्र लक्ष्मीरवस्थानं तनुते सुकृतोदयात् ।
प्रायशस्तत्र तिष्ठामि मराल इव मानसे ॥ १२७ ॥
चिरं स्थितस्तवाऽऽवासे प्राप्तं लक्ष्मीफलं मया ।
यास्यामो वयमेतर्हि स्वस्ति तुभ्यं महात्मने ॥१२८॥
इत्थं दाननरो भूपं प्रत्युक्त्वाऽथ श्रियं प्रति ।
चलितो दत्तसंकेत इव राजनिकेतनात् ॥ १२९ ॥
इतश्चागाद् नरस्तद्वत् पुरतः पृथिवीभुजः ।
देव! त्वं विद्धि मां श्लोकनामानं वेगवत्तरम् ॥१३०॥
लक्ष्मीलताफलं यत्र देव! दानं विजृम्भते ।
तत्राहं सततं कुर्वेऽवस्थानं गुणबद्धवत् ॥ १३१ ॥
तूष्णींभाजि महीनाथे श्लोकनामा नरः क्षणात् ।
तत्पादाभ्यामचलत् तदाहूत इवोच्चकैः ॥ १३२ ॥
इतश्च चण्डकोदण्डं दोर्दण्डे कलयन् कलम् ।
प्रादुर्बभूव मनुजः कोऽपि कार्तस्वराकृतिः ॥ १३३ ॥
कस्त्वं भवसि भूपेन पृष्टे सति महात्मना ?।
सोऽभाषिष्ट वचश्चारु रूप्यघर्घरनिस्वनः ॥ १३४ ॥
भूपते! सत्त्वनामानं मां विद्धि नररूपिणम् ।
श्रियं प्रति प्रयातास्मि न स्थास्यामि तवान्तिके ॥१३५॥
विहस्येत्यगदद् राजा त्वां समुद्दिश्य चित्तगम् ।
गृहीतमिदमुद्दामं दारिद्र्यं दयितान्वितम् ॥ १३६ ॥
श्रीर्यातु यातु दानं च यातु श्लोकोऽपि लोकतः ।
न ते गमनमाजीवमनुमन्यामहे वयम् ॥ १३७ ॥

सर्वेऽप्यर्थास्त्वयि सति प्राप्यन्ते पाणिपङ्कजे ।
न नरस्त्वां विना भाति वक्ता निर्लक्षणो यथा ॥१३८॥
अर्थास्तावद् गुणास्तावत् तावत् कीर्तिः समुज्ज्वला ।
यावत् खेलसि सत्त्व ! त्वं चित्तपत्तनमध्यगः ॥१३९॥
निशम्येदमुवाचाथ सत्त्वनामा महामतिः ।
देव ! स्थास्यामि यौष्माकगुणसंबन्धबद्धधीः ॥१४०॥
इतोऽभाणि श्रिया देव्या हंहो ! दान ! नरोत्तम ! ।
नैवाद्यापि समायाति सत्त्वनामा महाबलः ॥१४१॥
वयमेकाकिनः सर्वे तमेकं पुरुषं विना ।
लोचनं हि विना सर्वमङ्गोपाङ्गं हि पङ्गुवत् ॥१४२॥
ततो दाननरोऽचालीदाहातुं सत्त्वपूरुषम् ।
नृपपार्श्वे समागत्य दृष्ट्वाऽमुं तत्र संस्थितः ॥१४३॥
अनायाते नरे दाने दध्यौ लक्ष्मीः स्वचेतसि ।
बन्दिग्राहेण मां कश्चिद् ग्रहीता गतयामिकाम् ॥१४४॥
अथ श्लोकेन सा साकं समागत्य नृपाग्रतः ।
उवाच देवी भूपालं दीप्यमाना रदद्युता ॥ १४५ ॥
देवाऽहं पद्मदेव्यस्मि त्वत्पुरद्वारवासिनी ।
मत्सखी चन्द्रभागाऽस्ति चन्द्रज्योत्स्नेव निर्मला॥१४६॥
तयाऽभाणि विहस्येदं तव नव्यस्य भूपतेः ।
किं यदस्तितरां सत्त्वं राज्यश्रीमतिभूनिभम् ?॥१४७॥
ततो दारिद्र्यनामाऽयं मया चक्रेतरां नरः ।
तव सत्त्वपरीक्षायै महासत्त्वशिरोमणेः ॥ १४८ ॥
वरं वृणु महाभाग ! तुष्टाहं तव साहसात् ।
अथोवाच नृपो देवि ! हृषिताऽसि यदि स्फुटम्॥१४९॥
शत्रोरमारकं राज्यलक्ष्मीवृद्धिनिबन्धनम् ।
वरं प्रयच्छ मे देवि ! यदि तुष्टासि सत्यतः ॥१५०॥
अथ तस्मै ददौ देवी दिव्यरत्नं स्फुरत्प्रभम् ।

अस्मिन् बद्धे धनुर्दण्डे निद्रात्यरिबलं रणे ॥ १५१ ॥
अथो तिरोदधे देवी तत्सत्त्वालोकविस्मिता ।
राजापि नितरां दध्रे परमामोदसंपदम् ॥ १५२ ॥
अथान्येद्युर्यशो नाम दूत एत्य व्यजिज्ञपत् ।
देव ! चन्द्रकलापुर्यां भूमीनाथः परन्तपः ॥ १५३ ॥
तस्य सोमाङ्गभूः सूरः पद्मो यशोमतीभवः ।
भुजाविव सममाणावभूतां तनुसंभवौ ॥ १५४ ॥
कैतवेन विनिक्षिप्तः सोमया पद्मशेखरः ।
तद्वियोगेन भूपालः परलोकमुपेयिवान् ॥ १५५ ॥
बभूव तत्पदस्वामी सूरः सोमासमुद्भवः ।
सोऽपि त्वद्देशभागेषु समागाद्य युयुत्सया ॥ १५६ ॥
सहजं कृत्रिमं वापि यत्तु वैरं समं मया ।
तदहं वेद्मि नः स्वामिन् ! गूढमन्त्रः स भूपतिः॥१५७॥
सोऽयं भवानिवाऽऽकृत्या लक्ष्यतेऽलक्ष्यतेजसा ।
युवयोर्न तिलेनापि भेदः क्षीराम्बुनोरिव ॥ १५८ ॥
तत्क्षणं कणिकागुप्यद्दूर्वादिभिरनेकशः ।
व्यानशे नगरीबाह्यदेशोऽङ्गीव कर्मभिः ॥ १५९ ॥
बभूवुर्मण्डलाधीशाः सर्वसन्नहनोद्यताः ।
जहृषुर्वीरभोगीणबाहवो बाहुसंभवाः ॥ १६० ॥
विन्ध्याद्रिभूरिवाऽऽभाति निर्यद्भिर्भूर्मतङ्गजैः ।
हयैश्च सिन्धुवाह्लीकाऽऽकरनिर्मितवद् भृशम् ॥१६१॥
सुषमाकालजातैर्वा पत्तिभिश्च पदे पदे ।
रथैरनेकनिष्पन्नप्रद्योतनरथैरिव ॥ १६२ ॥
प्रयाणैरुत्प्रयाणैश्च बहुभिः पद्मशेखरः ।
स्वकीयदेशसीमस्थः समभूद् भूरिसैन्यवान् ॥ १६३ ॥
सूरोऽपि निकटीभूय तस्थिवान् बलमेदुरः ।
आवाससंस्थया बिभ्रत् सार्वभौमबलश्रियम् ॥१६४॥

संजग्माते क्रमेणाऽथ सेनाम्भोधी महारयौ ।
स्वनत्समरतूर्यालीगम्भीररवभीषणौ ॥ १६५ ॥
गजा गजैरयुध्यन्त योधा योधै रथा रथैः ।
दन्तादन्ति खड्गाखड्गि तुण्डातुण्डि यथाक्रमम्॥१६६॥
रजोराज्याऽम्बरे छन्ने घण्टानादैर्महागजाः ।
सुभटैरन्वमीयन्त मोद्गारैरिव भोजनम् ॥ १६७ ॥
मुद्गरैः केऽपि पात्यन्ते पवनैरिव पादपाः ।
अधावन् केचनोदग्रा उद्दन्ता इव दन्तिनः ॥ १६८ ॥
पद्मशेखरभूपालबलं निर्बलतां गतम् ।
सूरभूमीपतेः सैन्यसन्निपातेन सर्पता ॥ १६९ ॥
दत्तं देवतया रत्नं कोदण्डे पद्मशेखरः ।
ध्वान्ताधायि परबले वंशे ध्वजमिवादधे ॥ १७० ॥
अथाऽवष्टभ्य कोदण्डे स्वदोर्दण्ड इवाऽर्पिते ।
निद्रान्ति स्म भटाः सौमाश्चिरं भ्रान्ताऽध्वगा इव॥१७१॥
केचिद् रथेषु रथिनस्तल्पेषु रचितेष्विव ।
प्रसार्य चरणद्वन्द्वं शेरते स्म रणाङ्गणे ॥ १७२ ॥
केषां पाणितलादस्त्रं ह्रियेव गलितं ततः ।
पूर्वाधीतं यथा शास्त्रमिव स्मरणवर्जनात् ॥ १७३ ॥
तुरगा अपि निद्रान्ति किञ्चिन्मीलितलोचनाः ।
ऊर्ध्वस्था नवमुद्गानां स्वेच्छया खादनादिव ॥१७४॥
अथो पद्ममहीपालो नियम्य निजबान्धवम् ।
सूरं निजे रथे न्यस्यत् गुम्फेऽर्थमिव सत्कविः॥१७५॥
कोदण्डाद् देवतारत्नमुद्दध्रे पद्मशेखरः ।
सुप्तोत्थिता इव भटा बभूवुः सूरसेविनः ॥१७६॥
जितकाशी नृपः पद्म आसाद्य विषयं निजम् ।
पुरीं चन्द्रकलां प्राप प्रतापजितभाःपतिः ॥१७७॥
परन्तप इव प्राज्यं राज्यं प्रबलविक्रमः ।

आससाद पुरं चापि स त्वरितबलान्वितः ॥१७८॥
अन्येद्युः कोऽपि निर्ग्रन्थो ग्रन्थवद्वर्णभास्वरः ।
सतत्त्वः सज्जनानन्दी पूर्वे हि समवासरत् ॥१७९॥
तं वन्दितुं महीनाथः सनाथः परया मुदा ।
अगादुपवने तस्मिन् महामुनिपवित्रिते ॥ १८० ॥
प्रणम्य परया भक्त्या सुखासीने क्षितीश्वरे ।
महामुनिरुवाचेदं मोहध्वान्तदिवामुखम् ॥ १८१ ॥
अमुष्यां संसृतौ सर्वमस्थैर्यस्य मुखं सुखम् ।
दाराः कारागृहाणीव जीवितं फेनवच्चलम् ॥ १८२ ॥
श्रुत्वेदं पद्मभूपालो भववैराग्यभावतः ।
अवोचत प्रभो ! कर्मविपाकेभ्यो बिभेम्यहम् ॥१८३॥
कर्मबन्धच्छिदं कञ्चिद् मार्गं सन्मार्गदेशक ! ।
निवेदय परं पूर्वभवं श्रोतुं समुत्सुकः ॥ १८४ ॥
अथाभ्युवाच निर्ग्रन्थः पुरातनभवेऽभवः ।
भाल्लूकनामनि ग्रामे जिनदत्तः कृषीवलः ॥ १८५ ॥
भीष्मे ग्रीष्मे त्वमन्येद्युर्गृहीत्वा शकटावलीम् ।
अनेकैः किंकरैः पूर्णामायासीर्भीमकाननम् ॥ १८६ ॥
लङ्कोद्देशमिवोत्तालपलाशशतसंकुलम् ।
गेयवद् विलसत्तालं सशालं नगरं यथा ॥ १८७ ॥
पाण्डुपुत्रमिव प्रेङ्खदर्जुनेन प्रसाधितम् ।
हरिवक्ष इव क्रीडद्वनमालाविभूषितम् ॥ १८८ ॥
( त्रिभिर्विशेषकम् )
कांश्चिदुच्छेदयामास मूलादपि विरोधिवत् ।
शाखोपशाखाविकलांश्चक्रे कांश्चन भूपवत् ॥१८९॥
गगनाङ्गणमाध्यस्थ्यं गते गगनदीपके ।
अगाः समं कर्मकरैः सरो मानसविभ्रमम् ॥ १९० ॥
हस्तपादादिकं शौचं विदधुः किंकरास्तत्र ।

इतश्चागाद् मुनिः कश्चिद् मार्गभ्रष्टस्तदन्तिके ॥१९१॥
दिष्ट्या दृष्ट्वा मुनिं दध्यौ धन्योऽहं यदसौ मुनिः ।
मया दृष्टो महारण्ये कल्पद्रुम इवाऽङ्गवान् ॥ १९२ ॥
तदेव भोजनं शस्यं यद् दत्तं गुरवे भवेत् ।
सैव प्रज्ञा यया पापं न कुर्याद् विधुरेष्वपि ॥ १९३ ॥
विमृश्येदं विशुद्धात्मा भूरिभावविशेषतः ।
द्विः करम्बेण पीयूषशीतेन प्रत्यलाभयत् ॥ १९४ ॥
तवाभ्यर्णचरश्चण्डो भवन्तं दानतत्परम् ।
विलोक्य धन्योऽयमिति मुहुस्त्वामन्वमोदत ॥१९५॥
वसन्तीं जगतीं प्राप त्वत्सार्थेन महामुनिः ।
क्रमेण च भवांल्लेभे सौधर्मे त्रिदशश्रियम् ॥ १९६ ॥
अथ च्युत्वा भवाञ्जज्ञे नरेन्द्रः पद्मशेखरः ।
करम्बदानाद् द्विर्लाभोऽभवद् राज्यद्वयस्य ते ॥१९७॥
चण्डोऽपि क्रमशो जज्ञे तस्मिन् यक्षो महावने ।
भवान् यत्र समायातो देवीकूटप्रयोगतः ॥ १९८ ॥
यक्षेण फणिनो रूपं विधाय त्वं च रक्षितः ।
संहृतं तव खर्वत्वं राज्यलक्ष्मीसमागमे ॥ १९९ ॥
अहो ! सुपात्रदानस्य यत् फलं जायतेऽङ्गिनाम् ।
वागीशोऽपि गिरां गुम्फैस्तद् वर्णयितुमक्षमः॥२००॥
यत्त्वयाऽपृच्छि भूनाथ ! समुपार्जितकर्मणाम् ।
विपाको बन्धसत्तात्मा चतुर्गतिनिबन्धनम् ॥२०१॥
स विपाकः क्षितेनाथ ! सर्वकर्मलतायनः ।
जिनभर्तुर्विना दीक्षां बध्यमानो न रुध्यते ॥ २०२ ॥

यतः—

प्रव्रज्या भवपाथोधिनिस्तारणतरीनिभा ।
प्रव्रज्या साम्यमाकन्दवसन्तसमयोपमा ॥ २०३ ॥
श्रुत्वेदं पद्मभूपालो राज्यसौस्थ्यं विधाय च ।

प्रव्रज्यामाददे राजपुत्रैः साकं तदन्तिके ॥ २०४ ॥
परिपाल्य चिरं चारु चारित्रं राजसंयमी ।
एकावतारः समभूद् वैजयन्ते स नाकसत् ॥ २०५ ॥
तस्माच्च्युत्वा विदेहेऽसौ प्राप्य तीर्थङ्करव्रतम् ।
अक्षयं नीरुजं कान्तं निर्वाणपदमेष्यति ॥ २०६ ॥
श्रुत्वेदं हन्त ! सत्पात्रं फलं न विकलं श्रिया ।
उवाच विस्मितो राजा राजमानो महाबलः ॥२०७॥
साम्प्रतं श्रोतुमिच्छामि गुरोः शीलनिदर्शनम् ।
उत्सुकोऽस्मीति गदिते बभाषे संयमीश्वरः ॥ २०८ ॥
सर्वेषामपि धर्माणां दुष्करं शीलपालनम् ।
इदं वशंवदं सर्वं भुवनं पुष्पधन्विनः ॥ २०९ ॥
शीलं भावलतामूलं शीलं कीर्तिनदीगिरिः ।
शीलं धर्माब्दपाथोधिः शीलं पापगिरेः पविः॥२१०॥
यथा महीपतिर्नीत्या यथा रात्रिः शशियुता ।
यथा च दयया धर्मो यथा पूर्वमसंपदा ॥ २११ ॥
यथा क्षान्त्या च निर्ग्रन्थो यथा ग्रन्थः सदाख्यया ।
यथा ज्ञानं क्रिययाऽङ्गी तथा शीलेन भूष्यते ॥२१२॥
( युग्मम् )

श्लथसद्भावनाधर्यः स्त्रीविलासशिलीमुखैः ।
सुनयोद्दाहतोऽधस्ताद् निपतेच्छीलकुञ्जरात् ॥२१३॥
अकीर्तेः कारणं योषिद् योषिद् वैरस्य कारणम् ।
संसारकारणं योषिद् योषितं परिवर्जयेत् ॥ २१४ ॥
सुशीलापावना काचित् स्तूयते विबुधैरपि ।
यथा पौतिकवृत्तान्ते श्रूयते वनमालिका ॥ २१५ ॥
तथाहि पुष्करद्वीपे कालम्भोधिमनोहरे ।
पुरं विभूषणं नाम भूतधात्रीविभूषणम् ॥ २१६ ॥
निरालम्बपरिश्रान्तो यत्र श्रान्तो दिवाकरः ।

अभ्रंलिहगृहेष्वस्यात् प्रदत्तेष्वासनेष्विव ॥ २१७ ॥
सौधजालकनिर्गच्छद्धूपधूमं घनोपमम् ।
विलोक्य केकिनः केकां कुर्वते यत्र वेश्मगाः ॥२१८॥
तस्मिन् बभूव भूपालो विमलो विमलाशयः ।
मूर्त्या सोमोऽपि यः सूरः प्रतापेन प्रकाशते ॥२१९॥
नाम्ना चम्पकमालेति पुष्पमालेव सद्गुणा ।
तस्यासीत् प्रेयसी प्रेमरत्नरोहणचूलिका ॥ २२० ॥
अन्येद्युर्मृगयाऽऽसक्तो महावनमगाद् नृपः ।
पीतवस्त्रपरीधानैः साकं व्याधैर्घृणोज्झितैः ॥२२१॥
ततो हेरम्बवत् केऽपि समुद्यतपरश्वधाः ।
केचित् प्राकारवद् भूरिन्यस्तयन्त्राः पदे पदे॥२२२॥
जघान निशितैः कुन्तैः कश्चिदाहूय शूकरम् ।
कश्चिच्छशग्रहव्यग्रो निलीनोऽस्थाल्लतान्तरे ॥ २२३ ॥
उड्डीनपक्षिपक्षोत्थविरावैः करुणाकरैः ।
अहो ! अन्यायवाक्यं तु व्याजहारेव काननम् ॥२२४॥
एतन्मरन्ददम्भेन रुदत्स्विव वनेष्विव ।
भयेन कम्पमानासु वल्लरीषु भुजास्विव ॥ २२५ ॥
केषुचित् पादहीनेषु धार्यमाणेषु केषुचित् ।
केषुचित् प्रोथहीनेषु पुच्छहीनेषु केषुचित् ॥ २२६ ॥
केषुचिद् बध्यमानेषु मार्यमाणेषु केषुचित् ।
केषुचिद् नश्यमानेषु श्वापदौघेषु सर्वतः ॥ २२७ ॥
इतश्च कश्चिदागत्य प्रणम्य परया मुदा ।
व्यजिज्ञपद् महीपालं कालं काननचारिणाम् ॥२२८॥
(चतुर्भिः कलापकम्)
देव ! ऋक्षाध्वचारेण गच्छता दूरतो मया ।
एका निरीक्षिता बाला कामसंजीवनौषधम् ॥२२९॥
तस्या रूपप्रतिच्छन्दो दर्पणे यदि वीक्ष्यते ।

सुधारसस्य किं तुल्यं त्रिजगत्यपि वर्तते ? ॥ २३० ॥
तद्रूपं वीक्षमाणोऽहं निर्निमेषविलोचनः ।
कोऽहं कुतश्च किं नाम न जानामीति मत्तवत् ?॥२३१॥
सर्वाश्चर्यनिधानाया यदि तस्या भवान् पतिः ।
पुरुषार्थस्तृतीयोऽपि ततः प्रथमतां गतः ॥ २३२ ॥
निशम्येदं महीपालो विमलश्चित्रिताशयः ।
तन्मार्गं दर्शयाऽस्माकमकारणसुहृत्तमः ॥ २३३ ॥
तस्याध्वदर्शनेनाऽथ ध्रुवस्य गुरुपोतवत् ।
संचेरे धरिणीनाथस्तत्काननमहोदधौ ॥ २३४ ॥
दूरादेव समायान्तमवलोक्य तपोधनाः ।
उत्तस्थुरुदयाहार्योदिततिग्मांशुबिम्बवत् ॥ २३५ ॥
षडंशभागिने तस्मै पाद्यमर्घ्यं यथाविधि ।
दत्त्वा कुशाऽऽसने राजा महर्षिभिर्निवेशितः ॥२३६॥
तेषां मुख्यो जगादैवं चन्द्रः कुलपतिस्ततः ।
धन्या वयं यतो दिष्ट्या दृष्टस्त्वमसि तत्त्ववित् ॥२३७॥
भवते तत्रभवते सपर्या काऽत्रनाऽधुना ।
करिष्यामोऽतिथिभ्यो हि प्रदत्तं श्रेयसे किल॥२३८॥
अथाह धरिणीनाथः पाथोनाथपृथुध्वनिः ।
युष्माकमिदमातिथ्यं यदाशीर्वादमङ्गलम् ॥ २३९ ॥
अथ प्रोवाच स ऋषिर्विहस्य जगतीपतेः ।
यदाशीर्वाददुष्प्रापं तद् मया दास्यतेऽधुना ॥२४०॥
ततः पुरस्थितां कन्यां धृतवल्कलवाससम् ।
साक्षात्सिद्धिमिवात्मीयामदीदृशदसौ ऋषिः ॥२४१॥
उक्तिप्रत्युक्तिकालोऽयं नैवाऽस्माकं गुणानघ ! ।
परमेकां वरां कन्यां कृतार्थय करग्रहात् ॥ २४२ ॥
अथो बभाषे भूपालः केयं किं नाम कन्यका ।
कमलङ्कुरुते वंशं किमर्थमिह संस्थिता ? ॥ २४३ ॥

इत्युक्ते धारिणीभर्त्रा जगादर्षिर्महातपाः ।
शुभाख्ये पत्तने भूमान् समभूद् मेघवाहनः ॥२४४॥
निजनाथमनःपान्थविश्राममणान्तरप्रपा ।
तस्य लक्ष्मीवती देवी लक्ष्मीर्लक्ष्मीपतेरिव ॥२४५॥
वार्धकोत्पन्नवैराग्यो लक्ष्मीवत्या समन्वितः ।
गिरिगर्भाश्रमे रम्ये तापसव्रतवानभूत् ॥ २४६ ॥
देव्या पूर्वभवो गर्भः पूर्वं राज्ञोऽप्रकाशितः ।
अवर्धिष्टाऽऽश्रमस्थाया वल्लयाः फलमिवोच्चकैः॥२४७॥
सुषुवे सा सुतां कान्तां गङ्गेव स्वर्णपद्मिनीम् ।
वनमालेति नामाऽभूदस्या दत्तं महर्षिभिः ॥२४८॥
बाल्यावस्थां व्यतीत्याऽसौ वल्कलाम्बरधारिणी ।
रूपसौन्दर्यराजिष्णुर्यौवनं समुपाययौ ॥ २४९ ॥
अस्याः प्रियो भवानेव ज्ञानाज्ज्ञातो महीपते ! ।
दिनाधिपं विना नान्यः कमलिन्या यतो वरः ॥२५०॥
अर्थिनां कामधुक्कल्पः कल्पद्रुरिव जङ्गमः ।
लावण्यजलपाथोधिर्दृशां विश्रामपल्लवः ॥२५१॥
कलानामेक आधारः क्षत्रवंशसमुद्भवः ।
एवं विमृशतामत्रभवानत्र समाययौ ॥२५२॥ (युग्मम्)
वल्लीनिभालिता यैव सैव लग्ना पदाम्बुजे ।
एकं हरिः परं गेहमायात इति सत्यगीः ॥२५३॥
इत्युक्त्वा कुलपो भूपं सुमुहूर्ते शुभे दिने ।
लक्ष्मीमिवाऽम्बुधिः कृष्णं पर्यणाययदङ्गजाम् ॥२५४॥
प्रणत्य मुनिमुर्वीशो निवृत्तः स्वपुरं प्रति ।
ऊचे परिजनं सर्वं गिरा मेघगभीरया ॥२५५॥
यः कश्चिद् मोहतो लोभाद् यद्वा कलहकौतुकात् ।
इमां चम्पकमालायाः पुरतः कथयिष्यति ॥२५६॥
स्वयं गतदयं हन्त ! हनिष्याम्यहितं हि तम् ।

इत्युक्ते तज्जनोऽवादीद् नाथ! श्रूयतां वचः॥२५७॥
युष्मत्प्रसादपात्रं स नर्मकेलिर्विदूषकः।
रक्षणीयः प्रयत्नेन शपथैरपि सर्वथा॥ २५८॥
नर्मकेलिरथाऽवादीद् मुक्त्वा व्यतिकरं त्वमुम्।
नान्यद् भोः! कथयिष्यामि यतः सत्ययुधिष्ठिरः।२५९।
हंहो! ग्रहिल! मा ग्रामं ज्वालयेति निवारिते।
स्मारितोऽहं शुभमिति लोकोक्तिः सत्यवाक् कृता॥२६०॥
इत्थं निर्भर्त्स्य भूपालो नर्मकेलिं विदूषकम्।
न्यक्षेपयत् क्षणात् कारागारे नरकसन्निभे॥२६१॥
योगीन्द्रो भैरवानन्दी खट्वाङ्गीह समागमत्।
तमुपासितुमेतर्हि गच्छामि मृगलोचने!॥२६२॥
व्यपदिश्येति भूपालो देवीं चम्पकमालिकाम्।
वनमालां नवावासवासिनीमभ्यपद्यत॥ २६३॥
कियत्यपि गते काले देवी चम्पकमालिका।
ब्राह्मे मुहूर्ते विदुषी चिन्तयामास चेतसि॥२६४॥
योगीन्द्रव्यपदेशेन निषिध्य स्वपरिच्छदम्।
नवोढां योषितं काञ्चिद् यात्यसौ कपटे पटुः॥२६५॥
विमृश्येति सहाऽस्तोकलोका चम्पकमालिका।
यावत् कारागृहाभ्यर्णे संप्रापत् कोपनाऽऽशया॥२६६॥
तावदैक्ष्यत सा देवी तत्क्षणं नर्मकेलिना।
मेघवृष्टिरिव शुष्यच्छस्यौघेन कुटुम्बिना॥२६७॥
करमूर्ध्वं वितन्वानः शाखोद्धारमिवाऽऽयतम्।
उवाच देवि! त्वत्कार्ये मम जातं निबन्धनम्॥२६८॥
श्रुत्वेदं विस्मिता देवी तत्रागत्येत्युवाच सा।
किमर्थं तव संजाता मम कार्ये हि दुःखता?॥२६९॥
देवि! श्रीविमलो राजा मृगयायामुपागतः।
वनमालां परिणिन्ये मदत्तां तापसैर्जनैः॥ २७०॥

भयपूर्वं निषिद्धेऽथ समस्ते स्वपरिच्छदे ।
मया संलपितं देव्याः कथयिष्यामि निश्चितम्॥२७१॥
तां चित्ते बिभ्रता भस्माङ्कुरां राज्ञा ममोपरि ।
प्रीतिं विमुच्य मय्युच्चैरीदृशी विदधे दशा ॥२७२॥
प्रदीप्यमाना कोपेन कारागारादमुं ततः ।
आकृष्य नर्मकेलिं च बभाषे बान्धवोऽसि नः॥२७३॥
जगाम वनमालायाः सौधं चम्पकमालिका ।
विदूषकप्रणीतेन सा मार्गेण निरर्गला ॥ २७४ ॥
अवस्कन्दमिवायान्तीं तां दृष्ट्वा सौधरक्षकाः ।
पलायाञ्चक्रिरे भीतिश्लथमूर्धजबन्धनाः ॥२७५॥
असूनथ समादाय वनमाला भयद्रुता ।
सौधोत्सङ्गाद् ददौ झम्पां भयार्ताः किं न कुर्वते ?॥२७६॥
निपतन्तीं द्विजः कश्चित् स्वामिदत्तप्रसत्तिवत् ।
वनमालां गृहीत्वाऽऽशु न्यक्षिपद् गर्भवेश्मनि॥२७७॥
बिभ्राणाः सुभटाः केचिद् रोमाञ्चान् कवचानिव ।
कौक्षेयकान् समाकर्षन् यमजिह्वाभयङ्करान्॥२७८॥
केचिद् दृढतरं दत्त्वा भीत्या द्वारं स्तनन्धयान् ।
रुदतोऽपि निषेधन्ति दत्त्वा पाणिं मुखाग्रतः ॥२७९॥
अक्रियन्त प्रतोल्योऽपि दत्तद्वारा महाभटैः ।
निषिद्धलोकसंचारा महतीषु निशास्विव ॥२८०॥
नृपः कृत्वा समागच्छन् वाहाल्यां वाहवाहनम् ।
श्रुत्वा तुमुलमप्राक्षीत् किमेतदिति रक्षकान् ? ॥२८१॥
ततः कलकलं राजा निशम्योचे स्वरक्षकान् ।
किमागात् परचक्रं भोः ! किं वाऽकाण्डयुगक्षयः?॥२८२॥
उवाच रक्षको ज्ञात्वा समुद्भूतं तदद्भुतम् ।
तच्छ्रुत्वा शून्यचेतस्कः सोऽभवद् गतवित्तवत्॥२८३॥

---

१ निषिद्धे तु इत्यपि पाठः ।    २ साक्षेपमिति च ।

अथ चम्पकमालापि भूपतेः पार्श्वमेत्य च ।
अभाषिष्ट मृषावादी त्वत्तो नान्यो जगत्यपि॥२८४॥
योगिनं भैरवं नन्तुं मयामीत्युपदिश्य माम् ।
भैरवीं तां मुहुर्यासि सेवितुं निजवल्लभाम्॥२८५॥
इत्युक्त्वा कोपना देवी कोपागारमुपेत्य च ।
उद्वन्धनं व्यधादाऽऽशु नास्ति कोपवतां मतिः॥२८६॥
अन्वेषिताऽपि शतशो महीशेन जनैरपि ।
न दृष्टा वनमाला सा हस्तभ्रष्टाणुरत्नवत् ॥ २८७ ॥
यः कश्चिद् वनमालाया उदन्तं कथयिष्यति ।
तस्मै लक्षं प्रदास्यामि दीनाराणां विनिश्चितम् ॥२८८॥
इति घोषणया राजा ताडयामास डिण्डिमम् ।
शुद्धिस्तथापि न क्वापि लेभे दुःखी ततो नृपः॥२८९॥
निवृत्ते सर्वथाऽमुष्या उदन्ते दिक्षु विस्तृते ।
समातृको द्विजस्तस्मात् तया साकं विनिर्ययौ॥२९०॥
किञ्चिन्मार्गमतिक्रान्तो द्विजः प्रोवाच तां निशि ।
दुःखाद् रक्षितपञ्चत्वे ! साम्प्रतं वल्लभा भव ॥२९१॥
आकर्ण्येत्यवदद् देवी द्विजोऽसि मतिमानसि ।
क्षत्रियाण्या समं कामं संगमं किं विधित्ससि? ॥२९२॥
प्रतापाक्रान्तलोकोऽपि परासक्तो दिवाकरः ।
अपराधीव दैवेन पात्यते वार्धिपाथसि ॥ २९३ ॥
पुराणवेदिनो यूयं यद्यन्यायं करिष्यथ ? ।
तदा सत्येति गीरासीत् समुद्राद् धूलिरुत्थिता॥२९४॥
आपातरम्यैर्विषयैः किम्पाकद्रुफलैरिव ।
कथं स्वकुलमर्यादां त्यजसि क्षयवार्धिवत् ? ॥२९५॥
दिवा न वीक्षते घूकः काको नक्तं न वीक्षते ।
कामार्तः कोऽपि पापीयान् दिवा नक्तं न वीक्षते ॥२९६॥

---

१ अभाषतेति पाठान्तरम् ।

जीवितं शीलमेवैकं कुलीनस्य क्षमातले ।
आयुर्मृतादभ्यधिको यतः शीलमृतोऽशुभः ॥२९७॥
गुरुस्त्वं प्राणदातृत्वाद् महीशस्तत्र नन्दनः ।
अहं पुत्री स्नुषेवाऽथ कथमन्यद् विभाषसे ? ॥२९८॥
एष प्रोवाच कोपेन विदुष्यसि दुरात्मिके ! ।
अतस्त्वां मारयिष्यामि मारैर्नवनवैरहम् ॥ २९९ ॥
त्वदर्थे विषयस्त्यक्तः सेवितोऽपि हि पूर्वजैः ।
परं तवेदृशी चेष्टा निकृष्टे ! दुष्टचेष्टिते ! ॥ ३०० ॥
त्यक्तं राज्यं त्वदर्थेन देशो बन्धुः कुलं गृहम् ।
वित्तं मित्रं निजा भूमिः परं ते चेष्टितं ह्यदः ॥३०१॥
वनमालाऽप्यथोवाच रक्षताद् मां महापदः ।
जनकोऽसि सदाचारपरोपकृतिसुन्दरः ॥ ३०२ ॥
अथाकर्षद् द्विजश्चर्मकोशादस्त्रीं भृशं सिताम् ।
कामान्धा इव कोपान्धा कृत्याकृत्यपराङ्मुखाः३०३॥
ब्राह्मणस्य ततो माता बभाषे प्रेमबन्धुरम् ।
जीवन् प्राणी सुते ! भद्रशतं पश्यति निश्चितम् ३०४॥
वनमालाऽगदद् मातः ! पञ्चत्वं मम जायताम् ।
तथापि शीलविध्वंसो मा मे भवतु जातुचित् ॥३०५॥
ज्ञात्वेति निधनत्वेऽपि सस्पृहां शीलपालनात् ।
सहस्रेण सुवर्णस्य विक्रीणीते स्म स द्विजः ॥३०६॥
क्रायकेणापि तेनाशु प्रार्थिता द्विजवद् भृशम् ।
तद्वत् प्रोवाच सा साध्वी ह्येकरूपा सती यतः॥३०७॥
ततो बर्बरदेशे सा विक्रीता तेन विप्रवत् ।
एकत्रापि हि दुर्दैवाद् भवे भवशतं भवेत् ॥ ३०८ ॥
कदन्नभोजिनी कामं मलाविलकलेवरा ।
वनमालाऽभजद् नूनं शुष्कमालेव हेयताम् ॥ ३०९ ॥
अन्येद्युस्तृणकाष्ठौघमानेतुं काननं गता ।

ततः सा मूर्च्छयाऽभ्रश्यत् पृथिव्यां छिन्नवृक्षवत्॥३१०॥
मृतेव गतनिःश्वासा मौनिनी योगिनीव सा ।
अलब्धसंज्ञा सुचिरं स्थिता ही ! विधिजृम्भितम्॥३११॥
मृतकल्पामिमां चञ्च्वा ततो भारण्डपक्षिराट् ।
जगृहे नीरधेरन्तर्द्वीपे चन्द्रकलाह्वये ॥ ३१२ ॥
अम्भोधिवीचिभिर्लब्धसंज्ञाऽभूद् वनमालिका ।
संशुष्यद्वल्लरीवोच्चैः प्रथमाम्भोदवृष्टिभिः ॥ ३१३ ॥
किञ्चिच्चलत्तनूं दृष्ट्वा तां मुक्त्वा च नभस्तले ।
दयाधर्मपरायत्तश्चलति स्म स पक्षिराट् ॥ ३१४ ॥
स्वस्था सा हृदये दध्यौ तद् वृत्तं स्वप्नदृष्टिवत् ।
क चाश्रमो महर्षीणां क च राज्यपरिक्रिया ?॥३१५॥
क चाऽयमन्तरद्वीपे निवासो जनवर्जिते ? ।
क्व च मूर्च्छागमोऽरण्ये क्व चाऽयं वीचिसङ्गमः?३१६॥
अथवा दुःखसंदोहो ममाऽन्योऽपि प्रसर्पताम् ।
पश्चादपि हि यद् देयं तत्पूर्वं किं न दीयते ? ॥३१७॥
इति मीमांसमानायां तस्यां कश्चन पूरुषः ।
समभ्येत्याऽभ्यधादेवं प्रेममन्थरया गिरा ॥ ३१८ ॥
काऽसि विस्मेरपद्माक्षि ! कस्मादिह समागता ? ।
इत्युक्ते तेन सा कामं मौनमुद्रामशिश्रियत् ॥ ३१९ ॥
सोऽथाऽभाषिष्ट वृत्तं मे शृणु शोभनदर्शने ! ।
कासारनगरावासी भग्नपोतो महोदधौ ॥ ३२० ॥
दैवात् फलकमासाद्याऽन्तरीपं[1] प्राप्य सुन्दरि ! ।
एकाकिनोऽद्वितीया मे द्वितीया त्वं भविष्यसि॥३२१॥
श्रुत्वाथ दध्यावित्येषा हा ! दूरक्षमिदं व्रतम् ।
यत्र वा तत्र वा यातु कर्पासो लोठ्यते जनैः॥३२२॥
उवाच वनमालेदं मा बान्धव ! वदेदृशम् ।

[1] तस्थुषः इत्यपि पाठः ।

लोकद्वयविरुद्धं हि किं कुर्वन्ति विवेकिनः ? ॥३२३॥
अथ बौहित्थिकस्तस्याः कण्ठपाशं ददौ दृढम् ।
एवं सौधर्मकल्पस्य पश्यन्ति स्म सुधाभुजः ॥३२४॥
तां पञ्चत्वदशां प्राप्तामपि पालितसद्व्रताम् ।
वनमालां विलोक्यैते प्रादुरासन् सुधाशनाः ॥३२५॥
रे पौतिक ! परस्त्रैणसङ्गलालसमानस ! ।
कथमेतां सतीं हंसि शौनिको वर्करीमिव ? ॥ ३२६ ॥
शीलव्रतप्रभावेण वयमस्याः पदातयः ।
तवैतत्प्राणघातेन कृतान्ताऽनुचरा इव ॥ ३२७ ॥
ततः पोतवणिग् भुजङ्गिवाऽऽस्येऽक्षिपदङ्गुलीः ।
सर्वासामपि भीतीनां मरणं हि महद् भयम् ॥३२८॥
अथैतैः करुणासान्द्रैस्तं विमुच्य नृपप्रिया ।
विज्ञायाऽवधिना नीता विभूषणपुरे पुरे ॥ ३२९ ॥
आवासमध्यमासीनां तां निरीक्ष्य क्षितीश्वरः ।
विस्मयस्मेरहृदयो यावद् ध्यायति किञ्चन ॥३३०॥
अथोचुस्ते सुपर्वाणो देव ! धन्या वयं ननु ।
सतीचूडामणेरस्याः प्रणतं यत् पदद्वयम् ॥ ३३१ ॥
अमुष्याः शीलमाहात्म्यं वागीशो वक्तुमक्षमः ।
मन्ये शून्यपदभ्रान्ति नित्यं नित्यं दधात्यलम् ॥३३२॥
ततः पौतिकवृत्तान्तमनल्पं कल्पवासिनः ।
प्रजल्पन्ति स्म विस्मेरवदनाम्भोजराजिताः ॥३३३॥
अस्याः शीलमनश्लीलं हरेर्वर्णयितुं पुरः ।
गच्छामो वयमित्युक्त्वा प्रचेलुः कल्पवासिनः ॥३३४॥
सस्नेहमगदद् देवी देव ! कस्मात् कृशाङ्गकाः ।
भवन्तः श्वेतवसनाः संप्राप्तदर्शना इव ? ॥ ३३५ ॥
देवि ! त्वद्विरहे प्राप्ते क्षमिणः साम्यभाजिनः ।
जैनाचार्याः समाजग्मुर्विहरन्तः कृपालवः ॥ ३३६ ॥

तेषामन्तेऽर्हतो धर्मं श्रुत्वा न्यगदमञ्जसा ।
दीक्षां दत्त भवाम्भोधौ मज्जिनीमज्जिनीमिव ॥३३७॥
राजन्! भोगफलं कर्म तवाद्यापि हि वर्तते ।
ततोऽहं न्यगदं तूर्णमपूर्णस्वमनोरथः ॥ ३३८ ॥
वनमालां विना स्वामिन्! सर्वस्त्रीनियमो मम ।
तस्याः शुद्धिर्मया लब्धा न चरैरपि भूरिभिः॥३३९॥
अखण्डशीलालङ्कारा रुन्धतीव महासती ।
राजन्! द्वादशवर्षान्ते मिलिष्यति तव प्रिया॥३४०॥
स्वामिन्! मम कथं दुःखं जातं द्वादशवार्षिकम्? ।
अथोचे भगवानेवं ज्ञानज्ञातजगत्त्रयः ॥ ३४१ ॥
अनेकगोधनस्वामी भद्रसंज्ञः कृषीवलः ।
शालिग्रामे पुराऽऽसीस्त्वं दीनदानपरायणः ॥३४२॥
शरत्काले समायाते केदारे शालिशालिनि ।
गतस्त्वं हंसमिथुनमपश्यः काममोहितम् ॥ ३४३ ॥
गृहीत्वा वारलां पार्श्वेऽपश्यन्तीमथैकदा ।
आलिम्पस्त्वं कुङ्कुमेनात्मानं चाशुभकर्मणा ॥३४४॥
तद्वियोगातुरो हंसः परिभ्रमन्नितस्ततः ।
नैवाऽऽद् बिशखण्डानि नैवाऽऽप सलिले रतिम्॥३४५॥
अथ तं तादृशं वीक्ष्य वारलां जलधारया ।
अन्ते द्वादश नाडीनां प्रक्षाल्य दययाऽमुचः ॥३४६॥
दीनदानप्रभावेण त्वमभूद् धरणीश्वरः ।
दानेन परमा भोगा भवन्ति भववर्तिनाम् ॥३४७॥
त्वया द्वादशनाडीभिर्यत् कर्म समुपार्जितम् ।
वर्षैर्द्वादशभिर्बाढं तदशेषं सहिष्यते ॥ ३४८ ॥

यतः–

अदीर्घदर्शिभिः क्रूरैर्मूढैरिन्द्रियवाजिभिः ।
हसद्भिः क्रियते कर्म रुदद्भिरनुभूयते ॥ ३४९ ॥

तव प्राग्भवपत्नीयं त्वत्कृतमन्वमोदत ।
ततोऽस्या अपहारोऽभूत् कृतं कर्मैव नाऽन्यथा॥३५०॥
श्रुत्वेदं सुगुरून् नत्वा प्राप्य श्राद्धव्रतावलीम् ।
अतिष्ठं पौषधग्राही चतुष्पर्व्यां निजौकसि ॥ ३५१॥
देवैरसि त्वमानीता मम भाग्यैरिव द्रुतम् ।
न प्राप्नोति किमु प्राणी धर्मकर्मणि कर्मठः? ॥३५२॥
अथ भूमिपतिः साकं तया वैषयिकं सुखम् ।
भुञ्जानो न्यगमत् कालं सुधाभुगिव भूचरः ॥३५३॥
पर्यन्तेऽनशनं कृत्वा द्रव्यभावविभेदतः ।
जगाम लान्तकं कल्पं क्रमाद् निर्वाणमेष्यति॥३५४॥
वनमालापि संप्राप्तद्वादशश्रावकव्रती ।
इतवत्यच्युतं कल्पं तस्माद् मोक्षमवाप्स्यति ॥३५५॥
यथाऽनया निष्कलङ्कं सुशीलं परिपालितम् ।
तथान्यैरपि भूपाल! पालनीयं महाबल! ॥३५६॥
स्वामिन्! शीलवतीमध्ये धन्यैका वनमालिका ।
त्वंरते[1] ब्रह्मचर्याय यच्चरित्रेण मन्मनः ॥ ३५७ ॥
मूढो विषयसेवाभिर्विधत्ते जन्म निष्फलम् ।
विक्रीणीते न किं बालो रत्नं स्वल्पैः कपर्दकैः?॥३५८॥
नरकाय प्रजायन्ते विषया हन्त! सेविताः ।
तेषां त्यागस्तु भावेनापवर्गपथदर्शकः ॥ ३५९ ॥
यथोद्देशं हि निर्देश इति ध्यायन् महामुनिः[2] ।
उपाक्रमत माहात्म्यं तपसो वक्तुमप्यथ ॥३६०॥
तपो विजयतामेकं कार्मणं भुवनश्रियः ।
धर्मरोहणमाणिक्यं कर्मकक्षाऽऽशुशुक्षणिः ॥३६१॥
विधिवद्विहितादस्मात् कर्ममर्मविभेदकात् ।
सुगतिं लभते विद्याविलासो नृपतिर्यथा ॥३६२॥ (युग्मम्)

[1] 'त्वर्यते' इत्यपि । [2] 'महामतिः' इति पाठान्तरम् ।

तथाहि—

अस्ति स्त्रीस्पर्शवत् सर्वविषयेभ्वादिमं पुरम् ।
काञ्चनाख्यं लसद्भद्रशालं काञ्चनशैलवत् ॥३६३॥
तत्रासीत् पृथिवीपालः सूरसेनो महारथः ।
धरणीधारिणीनाम्नी तस्य देव्यौ बभूवतुः ॥३६४॥
विज्ञातजीवाजीवादिनवतत्त्वः सदाऽऽस्तिकः ।
तस्मिन्नेव पुरे श्रेष्ठी श्रीपालः परमार्हतः ॥३६५॥
सुशीललालसा धर्मे दानशौण्डा दयावती ।
श्रीमती तस्य जायाऽभूद् धीमती परमार्हती ॥३६६॥
चत्वारो नन्दनास्तस्य लक्ष्मीभर्तुर्भुजा इव ।
श्रीधरः श्रीपतिश्च श्रीदत्तः श्रीवत्स इत्यपि ॥३६७॥
अन्येद्युः कौतुकाच्छ्रेष्ठी तल्पस्थः सर्वनन्दनान् ।
पप्रच्छ केन केन स्वमुपायेनार्जयिष्यथ ? ॥ ३६८ ॥
तन्मध्यात् प्रथमोऽवादीत् तात! चिन्तातुराः कथम् ?।
वित्तार्जनं करिष्यामि नानारत्नपरीक्षया ॥३६९॥
सुवर्णस्य तथा वस्त्रसमूहानां च विक्रयैः ।
वित्तोत्पत्तिं विधास्याव इत्यन्यौ प्रोचतुः सुतौ ॥३७०॥
श्रीवत्सोऽथ जजल्पोच्चैर्गेयदत्तमना मनाक् ।
लक्षपाकादितैलेन कृताभ्यङ्गाङ्गमर्दकैः ॥ ३७१ ॥
विहितस्नानमङ्गल्यः पञ्चतूर्यलयान्वितम् ।
सौवर्णरत्नप्रतिमाः पूजयन् लास्यबन्धुरम् ॥ ३७२ ॥
नानाप्रसादपात्रौघैः पत्तिभिः परिवारितः ।
कुर्वाणो भोजनं भोज्यलेह्यपेयसुपेशलम् ॥ ३७३ ॥
सुश्लिष्टशाटकप्रान्तानिर्नीरितकरद्वयः ।
शलाकाऽत्रसरस्फूर्जद्गेयदत्तश्रवोयुगः ॥ ३७४ ॥
शय्यायां पुलिनाभायां निविष्टस्त्रिदशेशवत् ।

१ 'सूरसेनोऽभिधानतः' इति च ।

एकस्यां मूर्ध्नि बध्नत्यां धम्मिल्लं नवभङ्गिभिः ॥३७५॥
निक्षिपन्त्यां द्वितीयस्यां तालवृन्तानिलं मृदु ।
तृतीयस्यां ददत्यां तु ताम्बूलं प्रेमगर्भितम् ॥३७६॥
चतुर्थ्यां दयितायां तु मर्दयन्त्यां क्रमाम्बुजे ।
एवंभूतः करिष्यामि राज्यं श्रीसूरसेनवत् ॥ ३७७ ॥
( सप्तभिः कुलकम् )
अरे रे ! वक्षि वाचाटाऽसंबद्धं किमिदं वचः ? ।
मामकं त्यज धामेदमयं श्रेष्ठीत्यतर्जयत् ॥ ३७८ ॥
तेजः संगृह्य चण्डांशुर्वारिधेरिव रंहसा ।
क्षीरकण्ठोऽपि तद्गेहाद् निर्ययौ श्रेष्ठिनन्दनः ॥३७९॥
अपमानेन तातस्य प्रेरितः प्राप सुन्दरम् ।
पुरं रत्नपुरं नाम सश्रीकं स्मेरपद्मवत् ॥ ३८० ॥
तत्र श्रीरत्नकेत्वाख्यो हरिवंशान्वयी नृपः ।
सुदक्षिणा प्रिया तस्य क्रतोरिव सुदक्षिणा ॥ ३८१ ॥
चारुसौभाग्यसौधाग्रपताकाकाञ्चनच्छविः ।
सौभाग्यमञ्जरी तस्य नन्दनी नेत्रनन्दनी ॥ ३८२ ॥
नयसारो यथार्थाख्यो मन्त्रिपुत्रः पवित्रधीः ।
अपाठीद् विमलाख्यस्योपाध्यायस्यान्तिके तथा॥३८३॥
अधीयानैश्छात्रवर्गैः सेवितक्रमपङ्कजम् ।
श्रीवत्सो नगरस्यान्तस्तमुपाध्यायमैक्षत ॥ ३८४ ॥
तं प्रणम्याऽवदत् पूज्य ! मह्यं विद्याप्रदो भव ।
इत्युक्तेऽपाठयदसौ सुतवच्छ्रेष्ठिनः सुतम् ॥ ३८५ ॥
पुरातनभवोपात्तज्ञानावरणकर्मणा ।
पठन्नपि न जानीते किञ्चनाऽसंज्ञिजीववत् ॥३८६॥
मूर्खचट्ट इति स्फीतं गुणनिष्पन्नमीदृशम् ।
तस्य नाम ददुश्छात्रा यतस्ते केलिवृत्तयः ॥३८७॥
अनेनाहूयमानोऽसौ दूयते स्म क्षणे क्षणे ।

प्रनष्टेनेव शल्येन घनाघनघनोदये ॥ ३८८ ॥
निहोतव्यमिदं केनाप्युपायेन मया कथम् ।
विमृश्येति मुहुश्चक्रे छात्राणां भक्तिमद्भुताम् ॥३८९॥
उत्तितेज कपर्देन पट्टिकाः प्रतिवासरम् ।
पर्यपूर्यन्त पात्राणि विधाय खटिनीद्रवम्[1] ॥ ३९० ॥
छात्राणामासनान्येष विन्यस्यति दिवानिशम् ।
पदसंवाहनादीनि कर्माणि विदधेतराम् ॥३९१॥
नाम च्छात्रैर्ददेऽथास्य विनयचट्ट इत्यपि ।
दुर्भिक्षं नाम तेषां हि किमाख्यासु विजृम्भते? ॥३९२॥
अमुष्य भक्तिचट्टस्य पाठकुण्ठस्य सर्वथा ।
एवं द्वादश वर्षाणि हर्षोत्कर्षजुषोऽव्रजन् ॥३९३॥
तस्यां तु लेखशालायां पठन्ती राजकन्यका ।
सौभाग्यमञ्जरी नाम्ना जज्ञे यौवनपावना ॥३९४॥
कस्मैचिद् गतविद्यायाऽवद्यवाक्यवराय माम् ।
दास्यते जगतीनाथः कन्यार्थी मत्यगोचरः ॥३९५॥
नयसारः पुनरसौ मन्त्रिपुत्रो निधिर्धियाम् ।
वीरः शूरो नयी शान्तः सुदाक्षिण्यः प्रियंवदः ॥३९६॥
यद्येष मम जीवेशो जायते पुण्ययोगतः ।
तुष्टा मे देवताः कुल्याः सत्याश्चाशीःपरम्पराः॥३९७॥
इत्थं विचिन्त्य सप्रेमम्पश्ववचनं च सा ।
नयसारं प्रति प्रीत्या बभाषे रहसि स्थिता ॥३९८॥
नयसारोऽप्युवाचेदं कैतवेन कृतस्मयः ।
युक्तमुक्तं त्वया भद्रे! भृङ्गारद्रुघनावलि! ॥३९९॥
देवानामर्थनीया त्वं यदि प्रार्थयसे च माम् ।
तद् मे सभाग्यं सौभाग्यं किन्तु किञ्चन वच्म्यहम्॥४००॥
त्वं कन्यकाऽसि भूमीन्दोस्तत्पत्तेरस्मि नन्दनः ।

---

[1] 'खटिकाद्रवम' इत्यपि ।

मृगद्विपेन संबन्धः किं भद्रायाः प्रशस्यते ? ॥ ४०१ ॥
अथोचे भूपतेः पुत्री सत्यमेव त्वयोदितम् ।
परं विद्यागुणैः कोऽन्यस्तव तुल्यो जगत्यपि ? ॥४०२॥
कस्याऽपि गुणहीनस्य किं करिष्यामि पाणिगा ।
ककुद्मतो गले बद्धाऽनड्वाहीव वराकिका ॥४०३॥
नयसारोऽदधाच्चित्तेऽनुरक्तं मयि मानसम् ।
रक्षितुं शक्यते नैव निषिद्धमपि युक्तिभिः ॥४०४॥
यतः—
अपि चण्डाऽनिलोद्धूततरङ्गस्य महोदधेः ।
शक्येत प्रसरो रोद्धुं नानुरक्तस्य चेतसः ॥ ४०५ ॥
उवाच राजपुत्री च यदि त्वं सदयो मयि ।
तदा सत्यं कुरु वचोऽपरथाऽग्निर्वरो मम ॥ ४०६ ॥
ओमित्युक्ते नयेनाऽथ दाक्षिण्येन क्षणादपि ।
अन्येद्युः प्रेषयामास तदन्ते चेटिकां च सा ॥४०७॥
अस्मिन्नेव दिने लग्नं परमोच्चग्रहान्वितम् ।
आकृष्टमावयोः पौण्यैरंशैरिव पुरःसरम् ॥ ४०८ ॥
करभ्यो वायुवेगिन्यो गोणी पूर्णा मणीगणैः ।
प्रगुणीकारिताः सन्ति प्रच्छन्नं मन्त्रिनन्दनः ॥४०९॥
ओमित्युक्तेति कापट्यादसौ विनयचट्टकम् ।
रहस्युवाच भोः ! राजकन्यकां दापयामि ते ॥४१०॥
अश्रद्धेयमिदं श्रुत्वा व्योमपुष्पमिवाऽवदत् ।
नयसार ! कथं दैवहतं हससि केलिना ? ॥४११॥
अयुक्तं वक्तुमन्याय्यं हन्त ! युष्मादृशां विशाम् ।
न भाति चरणे बद्धं करभस्य हि नूपुरम् ॥४१२॥
हंहो ! विनय ! जल्पामि वचनं सत्यमीदृशम् ।
नात्र हास्याऽऽस्पदं किञ्चिद्भवता सह तन्यते ॥४१३॥
कृत्वा सौभाग्यकन्दल्या पाणिग्रहमहोत्सवम् ।

उच्चैर्मारुह्य गन्तव्यमुज्जयिन्यां त्वया द्रुतम् ॥४१४॥
अथ प्रमाणमेवास्तु जजल्प श्रेष्ठिनन्दनः ।
सक्तुमध्ये घृतक्षेपो हर्षोत्कर्षाय कस्य न? ॥४१५॥
प्रदोषेऽध्यापकं नत्वाऽवादीद् विनयचट्टकः ।
तात! प्रातर्गमिष्यामि पितृपादनमस्यया ॥४१६॥
हंहो! वत्स! ममाभ्यर्णे स्थितो विनयभृच्चिरम् ।
परं विद्यालवो ज्ञातो न त्वया पूर्वकर्मतः ॥४१७॥
गुरूणां क्रमसेवा हि निष्फला न प्रजायते।
एष प्रवादो मा भूयादसत्य इति चिन्तयन् ॥४१८॥
अभिमन्त्र्य पवित्रात्मा श्रीसारस्वतविद्यया ।
अपाययद् घर्षयित्वा चन्दनं श्रेष्ठिनन्दनम् ॥४१९॥
प्रणिपत्य गुरोः पादौ नयसारनिवेदिते ।
तस्मिन् स्थाने गतो रात्रौ हृष्टो विनयचट्टकः ॥४२०॥
तस्य साहायकं कर्तुमिव ध्वान्तं जगत्यपि ।
प्रसृतं पुण्यपात्राणां सहायः को न संभवेत् ? ॥४२१॥
नयसाराम्बरं प्रीत्या परिधाय वणिक्सुतः ।
तामायातां परिणीयाऽध्यासामास क्रमेलकीम् ॥४२२॥
गतवत्यथ भूयस्यां काश्यप्यां राजकन्यका ।
अद्राक्षीद् विनयं सर्वपाठकानां विदूषकम् ॥ ४२३ ॥
तप्तग्रावतलक्षिप्तविमुग्धशफरीयिता ।
सर्वाङ्गतप्ता समभूद् नितरां राजकन्यका ॥ ४२४ ॥
अविचार्य कृतं कार्यं यत्तत् स्फुटं निरीक्षितम् ।
गुरुद्रोहपरायाः मे सर्वमल्पमिदं पुनः ॥ ४२५ ॥
अन्यासामपि स्वच्छन्दचारिणीनां जगत्यपि ।
भग्नो मार्गो मयाऽवश्यं नयसारप्रयोगतः ॥ ४२६ ॥
आत्मकुलक्षयत्रासाद् नयसारेण बुद्धितः ।
उद्वाहितो धिया न्यूनो नूनं विनयचट्टकः ॥ ४२७ ॥

इत्थं चिन्तातुरा दूरं तरुणं तरणिं यथा ।
दृशा संभावयामास तं न श्रेष्ठितनूद्भवम् ॥४२८॥
अथोज्जयिन्यां संप्राप्तो गृहीतोत्तुङ्गमन्दिरः ।
जनगोष्ठीषु विचरन् रञ्जयन् जनमानसम् ॥ ४२९ ॥
नव्यैः काव्यैः शुभैः श्राव्यैः सरसार्थैः स्वयंकृतैः ।
विद्याविलास इत्याख्यां लेभे पुर्यां मनोहराम् ॥४३०॥
( युग्मम् )

गृहापवरकासीना रुदती करुणस्वरैः ।
वासरान् गमयामास कृच्छ्रात् सौभाग्यकन्दली॥४३१॥
अन्येद्युरवदद् धात्री देव्यसौ श्रेष्ठिनन्दनः ।
शास्त्राम्भोनिधिपारीणो धुरीणः सत्क्रियावताम्॥४३२॥
यौवनोद्यानदहनं मानं मुक्त्वा मनस्विनि ! ।
प्रेमामृतरसापूर्णं तूर्णं ब्रूहि स्ववल्लभम् ॥ ४३३ ॥
प्रत्युवाच सुता राज्ञो यादृशोऽस्त्येष धात्रिके !।
जानामि तादृशं दृष्टो मया द्वादशवत्सरीम् ॥४३४॥
कलानां कौशलाद् देवि ! रञ्जितो नागरो जनः ।
विद्याविलास इत्याख्यां ततो नामास्य निर्ममे ॥४३५॥
कथञ्चित्तेन खञ्जित्वाद् रञ्जितो धात्रिके ! जनः ।
जानाति कनकमध्यं स्वर्णकारः, परो नहि ॥ ४३६॥

इतश्च—

काश्मीरमण्डलाधीशभीमनाम्ना महीभुजा ।
लेखः श्रीरत्नकेतोश्च प्रेषितः सन्धिविग्रहे ॥ ४३७ ॥
सलिप्यन्तरसंपूर्णो लेखः केनापि नैव सः ।
वाचितो गुरुणा नूनं दत्तमुद्र इवोच्चकैः ॥ ४३८ ॥
जगाद सचिवः स्वामिन् ! वाच्यते केवलं धिया ।
यदि विद्याविलासेन शास्त्राम्भोधिहिमद्युता ॥४३९॥

१ '-मञ्जरी' इति च । २ 'माप्य निजवल्लभम्' इत्यपि ।

नृपादेशात् समाहूतः पूर्वं पठितवत्सुखम् ।
तं लेखं वाचयामास निःशेषलिपिकोविदः ॥४४० ॥
तत्क्षणं परितुष्टेन महीनाथेन सन्मतिः ।
स्थापितः सचिवत्वेऽसौ न श्रद्धालुर्गुणेषु कः ? ॥४४१॥
नृपप्रदत्तसाम्राज्यभारः सुमतिहेतिभिः ।
दुःसाध्यान् साधयामास सचिवः शुचिभूषणः॥४४२॥
कदाचित् कथयामास कोऽपि क्षोणीपतेः पुरः ।
जगत्प्रियोऽपि देवायं न प्रियो निजयोषितः ॥४४३॥
कथं वेत्सि नृपोक्तोऽसौ बभाषे हन्त ! होरया ।
देव ! जानामि कामिन्या निजाया वल्लभो न यः॥४४४।
श्रुत्वेदं कौतुकादेष सेत्रावसरमागतम् ।
उवाच सचिवं चारु समक्षं निजपर्षदः ॥ ४४५ ॥
मन्त्रिन्नभिनवो मन्त्री राज्ञो भोजनदायकः ।
इत्यस्माकं सदाचारः कर्तव्यः सत्वरं त्वया ॥४४६॥
आमेत्युक्त्वा गतो गेहं विमनस्को गतस्ववत् ।
उवाच धात्रिका मन्त्रिश्रेष्ठं श्रेष्ठगिरा तया ॥४४७॥
अपमानं महीभर्त्रा किं ते वत्स ! प्रकाशितम् ।
किंवा धीविषयेऽप्युच्चैः कश्चिदर्थस्त्वगोचरः ?॥४४८॥
न मे मातर्महीभर्त्रा मानम्लानिः प्रकाशिता ।
कश्चिदर्थो न मे धात्रि ! मत्यगोचरतां गतः ॥४४९॥
परं क्रूरनिदेशोऽयं दत्तः क्षोणीभुजा स्वयम् ।
यत्तवौकसि भोक्तव्यं कल्पोऽस्माकं कुले ह्ययम् ॥४५०॥
गृहाऽऽगते महीनाथे मन्त्रिण्याः किल चेष्टितम् ।
प्रकटं भविता सर्व तदर्थं खेद एष मे ॥ ४५१ ॥
मन्त्रीश ! चिन्तया चित्तं खेदक्रान्तं करोषि किम् ?।
भोजने सज्जयिष्यामि राज्ञः सौभाग्यकन्दलीम्॥४५२॥

तद्वचःश्रवणादेव सुधासिक्त इवाभवत् ।
हस्तावलम्बनं पुंसां पततां किं मुदे नहि? ॥४५३॥
उवाच धात्रिका मन्त्रिगेहिनीं धीरया गिरा ।
एकाग्रहाऽसि हे वत्से! कृत्याकृत्यबहिर्मुखि! ॥४५४॥
मामकं वचनं वेगादेकं कुर्वभिमानिनि! ।
जनन्या इव नाज्ञा मे लंङ्घितुं युज्यते क्वचित् ॥४५५॥
सचिवो जगतीपालं त्वद्गृहे भोजयिष्यते ।
अभ्यधादिति ते भर्ता मन्मुखेन तवाग्रतः ॥ ४५६ ॥
मातः! केनापि भूपालो ज्ञापितश्चरितं मम ।
बुभुक्षुर्मा दिदृक्षुश्च तद् मन्ये तेन हेतुना ॥ ४५७ ॥
मातस्तर्हि मदाकारा मद्‍यामय इवाऽपराः ।
समानवस्त्रालङ्कारास्तिस्रस्तूर्णं समानय ॥ ४५८ ॥
भोजयन्ती महीपालं ताभिः साकमलक्षिता ।
यथा भवाम्यहं मातस्तथा कुरु गुणाकरे! ॥४५९॥
तस्या वचसि सत्यार्थे प्रगुणे विहिते चिरात् ।
भूपमामन्त्रयामास सचिवो भक्तिमेदुरम् ॥ ४६० ॥
आवासे मन्त्रिणोऽथास्य विमानसदृशे श्रिया ।
राजाऽगात् कृतशृङ्गारः परीवारपरीवृतः ॥४६१॥
भोजनायाऽऽसनासीने भूपाले सपरिच्छदे ।
एका मुमोच सौवर्णं विशालं स्थालमुत्तमम् ॥ ४६२ ॥
पीयूषरसनिष्यन्दिसंपूर्णानीव तत्क्षणम् ।
एका चिक्षेप पक्वानि फलान्यविकलान्यपि ॥४६३॥
अपरा काऽपि हृद्यानि पक्वान्नानि समन्ततः ।
द्राक् परिवेषयामास क्वणत्कङ्कणपाणिना ॥ ४६४ ॥
एका परिमलोद्गारहृद्यमोदनमद्भुता ।
अक्षिपद् भूपतेः स्थाले विशाले साधुचित्तवत्॥४६५॥

१ हस्तावलम्बद इत्यपि । २ लङ्घिताऽर्हभिदेशवत् ।

इयं स्त्रियमियं मन्त्रिगेहिनीति विचिन्वता ।
न सम्यग् विविदे राज्ञा सादृश्यं भ्रमकारि हि ॥४६६॥
कृतभुक्तिर्महीपालोऽशक्नुवन् प्रष्टुमञ्जसा ।
समीपे मन्त्रिणो मौनमाधत्ते स्म सविस्मयः ॥३६७॥
सपर्यां मन्त्रिणः प्राप्य गतवान् मन्दिरं नृपः ।
स्वानुवाच नरानेवं न ज्ञाता सचिवाङ्गना ॥४६८॥
तस्या निरीक्षणे कार्यः कोऽप्युपायो विशारदाः! ।
ते प्रोचुर्देव! नगरबाह्येऽस्ति पुरदेवता ॥ ४६९ ॥
कार्यं नृत्यं मन्त्रिपत्न्या मन्त्रिण्याऽऽतोद्यवादके ।
पुरो देव्याः पुरः पौरैर्देव ज्ञायते यथा ॥ ४७०॥
भवत्वेवं नृपः प्रोच्य द्वितीयेऽह्नि महीपतिः ।
पुरतः कथयामास तमादेशं मनोगतम् ॥ ४७१ ॥
क्षुद्राऽऽदेशमिमं श्रुत्वा गत्वौकसि सविस्मयः ।
अशेत मन्दिरस्यान्तश्चिन्तासन्तानतापितः ॥ ४७२ ॥
मन्त्री खेदपरो धात्र्या पृष्टः प्रोचे महत्तमः ।
क्षुद्राऽऽदेशस्य पृथ्वीशो धात्रि! पात्रीचकार माम् ४७३॥
जगाद भूपतेः पुत्री धात्री पावनया गिरा ।
समादेशं महीभर्तुर्दुःश्रवं धीमतामपि ॥ ४७४ ॥
पटहे पटुपाटं च वाद्यमानेऽमुना मुदा ।
अहं नृत्यं विधास्यामि हसन्तीति जगाद सा ॥४७५॥
वादयितुममुं पुत्रि! चेदसौ ज्ञास्यते नहि ।
लप्स्यते हास्यतां मन्त्री समक्षं नृपपर्षदः ॥ ४७६ ॥
तदाभाषिष्ट हृष्टा सा पुरतः सचिवेशितुः ।
दुष्प्रापार्थस्य लाभे हि हर्षो याति प्रकर्षताम् ॥४७७॥
अथ देवीगृहस्यान्तर्मश्चविन्याससुन्दरम् ।
साकं पौरजनैः सर्वैरुपविष्टे महीभुजि ॥ ४७८ ॥
मन्द्रमध्यादिभेदेन तत्ततिध्वनिनादतः ।

मन्त्रिणा वाद्यमानेऽपि पटहे पटुनिःस्वने ॥ ४७९॥
विहितोद्दामशृङ्गारा रम्भेव क्षितिगोचरी ।
हरन्ती पौरचेतांसि समागाद् मन्त्रिगेहिनी ॥ ४८०॥
(त्रिभिर्विशेषकम् )

ध्वनिमाकर्णयन्त्येषा पटहस्य यथा यथा ।
तथा तथाऽङ्गे रोमाञ्चोऽङ्कुरपूरमपूरयत् ॥ ४८१ ॥
अहो ! ईदृक् कुतोऽनेन ज्ञातं पटहवादनम् ?।
चित्रीयमाणा हृदये नर्नर्त्ति स्म लयोत्तरम् ॥ ४८२ ॥
नृणां निरीक्षमाणानां दम्पत्योस्तं कलाक्रमम् ।
शेषेन्द्रियभवा वृत्तिर्लोचनेषु लयं ययौ ॥ ४८३ ॥
मूर्धानं भूपतिर्धुन्वन् विस्मयस्मेरतां गतः ।
सर्वतत्त्वप्रवीणोऽसि व्याजहारेति मन्त्रिणम् ॥४८४॥
तामपूर्वां कलां दृष्ट्वा पद्मिनीप्राणवल्लभः ।
प्राप द्वीपं परं द्रष्टुमिवान्यत्रापि तादृशीम् ॥ ४८५ ॥
परिस्पन्दैः समं राजा प्रतस्थे नगरीं प्रति ।
ऊचेऽथ मन्त्रिणी नाथ ! करमुद्रा ममापतत् ॥४८६॥
सान्वया सुभगाऽऽनेया सस्नेहमिति वादिनी ।
प्राविक्षद् नगरस्यान्तर्हृष्टा सौभाग्यकन्दली ॥ ४८७ ॥
तदाऽऽदेशवशादेष प्रमोदोन्मादमासदत् ।
धन्योऽहमद्य सद्भ्रात्या भाषितो गौरवोत्तरम् ॥४८८॥
विजने तत्र तां वीक्ष्य लब्ध्वा च करमुद्रिकाम् ।
अचालीदुज्जयिन्यां हि बहिःस्थानां भवेद् मृतिः॥४८९॥
शीघ्रमायन् पुरीं दत्तकपाटं गोपुरं पुरः ।
निरीक्ष्य वप्रविस्तीर्णपयोमार्गमुपाययौ ॥ ४९० ॥
विश्रान्तोऽन्तर्भुजङ्गेन दष्टः स्पष्टमथो करे ।
हाहेति न्यगदद् मन्त्री मृत्योः पटहविभ्रमम् ॥४९१॥
इतश्च सौधमासीना वारवेश्याऽवनीक्षितुः ।

तं शुश्राव महानादं कर्णयोर्विषसेचनम् ॥ ४९२ ॥
अद्राक्षीत् पतितं क्षोण्यां सचिवं प्रसरद्गरम् ।
अक्षालयच्च पाणिस्थं मणिं नीरेण भूरिणा ॥४९३॥
अपाययदमुं तच्च परोपकृतितत्परा ।
सोऽभूदपविषो यस्मादचिन्त्यं मणिवैभवम् ॥४९४॥
पुनर्जातमिवात्मानं मन्यमानः कृतज्ञराट् ।
सचिवस्तामुवाचेदं किं कुर्वे तव वाञ्छितम् ॥ ४९५ ॥
चेद् नाथ! वरदोऽसि त्वं मत्तोऽन्यत्र त्वया ततः ।
भवेनैव भवानीतो न गन्तव्यं कदाचन ॥ ४९६ ॥
तया सार्कं चतुर्यामीमतिवाह्य घटीमिव ।
प्रातःकृत्यानि कृत्वाऽसौ निषसाद महासने ॥४९७॥
केनचिद् योगिना दत्तं प्रभावौषधिकण्डकम् ।
अबध्नात् पण्यपद्माक्षी चरणे सचिवेशितुः ॥४९८॥
तत्प्रभावादसौ जज्ञे चन्द्रकी वरचन्द्रकः ।
एकस्मिन् जन्मनि प्राप्तजन्मान्तर इव क्षणात् ॥४९९॥
उड्डीय बर्हिणो भ्राम्यन् गतत्रासं पुरेऽखिले ।
सन्ध्यायां तत्र पण्यस्त्रीगेहं याति स्म सर्वदा ॥५००॥
कण्डकव्यत्ययादेष यवनिकान्तरादिव ।
प्राप्तपुंस्त्वो नट इव वाहयामास शर्वरीम् ॥५०१॥
रमयित्वा निशां सर्वां पणस्त्रीणां करण्डकात् ।
प्रत्यहं विदधे मन्त्रिपुङ्गवं बर्हिणाकृतिम् ॥ ५०२ ॥
इतस्ततोऽपि गेहेषु भ्राम्यन्नेष दिने दिने ।
रात्रौ पणाङ्गनागेहमागच्छति वशीकृतः ।।५०३॥
इतो मन्त्रिण्यनायाते मन्त्रिण्यधृतिकारिणी ।
रतिं न क्वापि सा प्राप ग्रीष्मे हंसी मराविव ॥५०४॥
सोऽन्येद्युर्बर्हिरूपेण भ्राम्यन् स्वगृहतोरणम् ।

१ मुहूर्तवादाने च पाठ ।

आच्छाद्य पिच्छसंभारे वितेने तोरणश्रियम् ॥५०५॥
पत्युर्विरहतप्ताया मातरेष कलापवान् ।
प्रियागमनवर्त्मीर्ति मदत्ते मम नेत्रयोः ॥ ५०६ ॥
अज्ञानतो मया पूर्वं दृष्टः प्राणप्रियोऽप्रियः ।
इदानीं पूर्वदुष्कर्मविपाकाद् दूरतो गतः ॥ ५०७ ॥
छद्मश्रीसद्मनस्तस्य प्रियस्याहमजानती ।
पुराऽपि रोदनं चक्रेऽधुनाऽपि चिरशिक्षितम् ॥५०८॥
भोगिभोगविषज्वालालीढं दहतु चन्दनम् ।
कथं दहतु मे देहं निःसन्देहं हिमद्युतिः ?॥ ५०९ ॥
इत्थं विलापं कुर्वाणा मुहुः सौभाग्यकन्दली ।
निपपात महीपीठे हृतजीवेव केनचित् ॥ ५१० ॥
धात्र्या परिजनेनापि प्रतीकारे कृते सति ।
अतुच्छमूर्च्छाऽपगमात् स्वस्था तस्थौ कथञ्चन ॥५११॥
एवं च भाषमाणायां तस्या गेहादथो शिखी ।
अन्येद्युरगमद्भूपपुत्र्याः सौधे मनोहरे ॥ ५१२ ॥
तत्सख्या कौतुकादेष विधृतो गृहिजातवत् ।
अर्पितो मदनावल्या विश्राम इव चेतसः ॥ ५१३ ॥
कण्डकं त्रोटयामास वीक्षमाणा शिखण्डिनम् ।
नररूपिणमद्राक्षीदमुं सा सचिवोत्तमम् ॥ ५१४ ॥
किमेतदिति विस्मेरनयना मदनावली ?।
रोमाञ्चकण्टकभयादिवासनमथामुचत् ॥ ५१५ ॥
सत्यास्मिन्नासनासीने किमेतदिति साऽवदत् ?।
अथोचे सचिवः सर्वमेतस्याः पुरतो मुदा ॥ ५१६ ॥
मन्त्रिन् ! त्वद्विरहे राजा निखिला नागरा अपि ।
विमूढमनसोऽभूवन् दिग्मूढाः पथिका इव ॥५१७॥
मन्त्रिन् ! निष्ठुरचित्तोऽसि रूपं संगोपयन्निजम् ।
कुरुते लेख्यमेकोऽन्यो लेखामपि ददाति न ॥५१८॥

यत्प्रजल्पसि तत्सत्यं वाचा बद्धोऽस्मि निश्चितम् ।
मुञ्च मां बर्हिणं कृत्वा बद्धा च क्रमकण्डकम् ॥५१९॥
इत्युक्ते केकिरूपेऽस्मिन्ननया विहिते गते ।
इतश्चाभाणि तद्धात्र्या नरशब्दो मया श्रुतः ॥५२०॥
उपमातः ! कथं पुंसः संचारः सभवेदिह ? ।
यदीदृग्भाषसे नूनमसंबद्धमिवाधुना ॥ ५२१ ॥
पौनःपुन्येन धात्री सा तामूचे शपथान्वितम् ।
अथ सा कथयामास तत्सर्वं सचिवोदितम् ॥५२२॥
द्वितीयेऽह्न्येष स भ्राम्यन् कृतसङ्केतशब्दवत् ।
समागान् तत्र धात्री साऽवर्द्धयज्जगतीपतिम् ॥५२३॥
ज्ञातवृत्तः समेत्यासौ कर्त्तित्वा करकण्डकम् ।
मुख्यरूपधरं चक्रे धरणीशोऽथ मन्त्रिणम् ॥ ५२४ ॥
सानन्देनाथ राज्ञोचे मम पुत्री समुद्वह ।
वेश्यावृत्तं च तेनास्य समस्तं विनिवेदितम् ॥५२५॥
साकूतमथ साऽऽहूता क्षोणीशेन पणाङ्गना ।
स्वामिन् ! प्रसादमाधेहि ममाऽऽदेशनिदेशतः ॥५२६॥
वाचा बद्धममुं मुञ्च सचिवं दत्तजीवितम् ।
यथाऽङ्गजाया मे पाणिं गृह्णाति शुभवासरे ॥५२७॥
ओमित्युक्ते नृपस्तस्याः प्रसादं बहुकारयत् ।
उचितानुचितज्ञानं वारवेश्यास्ववस्थितम् ॥ ५२८॥
सुन्दरश्रेष्ठिनः पुत्र्या सहितां मदनावलीम् ।
पर्य्यणाययदुर्वीशो मन्त्रीशं शुभवासरे ॥ ५२९ ॥
स्थापितो युवराजत्वे दत्त्वा देशान् महत्तम' ।
न पुण्यं देहिनां मातुं शक्यतेऽम्भोऽम्बुधेरिव ॥५३०॥
तिसृभिः परिणीताभिर्वेश्यया सह मन्त्रिराट् ।
बुभुजे विषयान् मर्त्यजन्मचूतफलोपमान् ॥ ५३१ ॥
कालेन कियता रत्नकेतुः क्षितिपतिर्भृशम् ।

भवोद्विग्नोऽग्रहीद् दीक्षां तापसानां यथाविधि ॥५३२॥
विद्याविलासः समभूद् भूपालः पालयन् प्रजाम् ।
प्रचण्डशासनः पाकशासनः स्वरिवाऽऽगतः ॥५३३॥
अन्येद्युः श्रेष्ठिसू राजा चतुरङ्गचमूवृतः ।
रुरोध काञ्चनपुरं जम्बूद्वीपमिवाऽम्बुधिः ॥ ५३४ ॥
तेजोऽधिगम्य दुःसहं तस्य व्योममणेरिव ।
उलूक इव वाग्मूकः सूरसेनो ननाश च ॥५३५॥
नीलपत्रावलीकीर्णे बद्धकाञ्चनतोरणे ।
तत्राविक्षत् पुरे राजा सविद्युद्वारिदोपमे ॥ ५३६ ॥
स्वर्णपात्राणि संभृत्य रत्नैः पौरा डुढौकिरे ।
प्रसादं तेषु चक्रेऽसौ वाञ्छितार्थसमर्थकम् ॥५३७॥
श्रेष्ठ्यागाद् नगरीमुख्यः श्रीपालः सूनुभिः सह ।
श्रेष्ठिन् ! मामभिजानासि भाषते स्मेति भूपतिः॥५३८॥
सोऽप्यूचे सूर्यवत् ख्यातं राजानं त्वां न वेत्ति कः ?।
वस्तुतस्तु यथावस्थं नो वेद्मि त्वां महीपते !॥५३९॥
समक्षं सर्वलोकानां ततः श्रीवत्सभूपतिः ।
चरित्रं मूलतः सम्यग् संक्षेपेणेत्यवोचत ॥ ५४० ॥
तव सूनुरहं श्रेष्ठिन् ! श्रीवत्स इति विश्रुतः ।
रामाचतुष्टयीयोगप्रभृतेर्वचनात् पुरा ॥ ५४१ ॥
कोपाटोपोत्कटं स्पष्टं विज्ञाय त्वां विनिर्गतः ।
इमाश्चतस्रः संप्राप्तास्तव पादप्रसादतः॥५४२॥(युग्मम्)
सच्चक्रे पृथिवीपालः श्रीपालश्रेष्ठिनं ततः ।
वध्वः सर्वाश्च हृष्टाङ्ग्यो ह्याचारः कुलयोषिताम्॥५४३॥
यौवराज्ये पदे न्यस्य श्रीधरं प्रथमाङ्गजम् ।
राज्ययुग्ममथ प्राज्यं नयवृत्त्या शशास सः ॥ ५४४ ॥
अन्यदोपवनस्यान्तः सूरिः श्रीमतिसागरः ।
सवितेव तपोदीप्त्या पूर्वाद्रिः समवासरत् ॥५४५॥

तं वन्दितुं महीपालः पालयन् पावनीं क्रियाम् ।
जगाम भक्तितस्तत्र पौरवृन्दपरीवृतः ॥ ५४६॥
देशनाऽन्ते महिपालः पृष्टवानिति तान् गुरून् ।
पुरा कथं ममाज्ञानं सर्वत्रोल्लसितं प्रभो !?॥ ५४७॥
कथं पश्चाद् मुने ! ज्ञानं प्रसृतं मम कोविदात् ?।
इत्युक्ते न्यगदच्छ्रीमान् सूरिर्भूरिगुणोत्तरः ॥ ५४८ ॥
पुराजन्मनि पठतां महाविघ्नस्त्वया कृतः ।
अतस्तत्कर्मबन्धेन ज्ञानोल्लासोऽभवद् न ते ॥५४९॥
गुरुणा केनचित् पश्चात् सद्वाक्यैः प्रतिबोधितः ।
भक्तिं चक्रे धिया तेषु प्रत्यहं पुस्तकादिभिः ॥५५०॥
सत्कर्मबन्धतोऽभूस्त्वमुपाध्यायविशारदः ।
ज्ञानविघ्नाच्च मूर्खत्वं पूर्वं संप्राप्तवानसि ॥ ५५१ ॥
श्रुत्वेदमवदद् राजा कर्मबन्धो महान् कृतः ।
कथं श्लथी भवेद् नाथ ! ततः प्रोवाच संयमी?॥५५२॥
बद्धस्पृष्टनिधत्ताख्यास्त्रयो भेदा महीपते ! ।
मिथ्यादुष्कृतभणनादिभिर्जेयाः सुहेतिभिः ॥५५३॥
तदन्यः कर्मबन्धो यो निकाचित इति स्मृतः ।
भूयसा तपसा सोऽपि विजेतव्यो मुमुक्षुभिः ॥५५४॥
यथा तुषारपातेन दह्यतेऽनोकहव्रजः ।
यथाऽऽम्लरसविष्टब्धं लङ्घनेनापदिश्यते ॥ ५५५ ॥
यथा दवाग्निनाऽरण्यं दह्यतेऽसह्यतेजसा ।
तथा सर्वाणि कर्माणि जीयन्ते तपसा चिरात् ॥५५६॥
(युग्मम् )
कीर्तेर्गर्वाद् भयाद् वाऽपि सुदेयं दानमङ्गिनाम् ।
कुललज्जाभराभ्यां च सुकरं शीलपालनम् ॥५५७॥
मृषाऽन्यरञ्जनाद् वाऽपि सुकरा हन्त ! भावना ।
दुष्करं तु तपस्तप्तुं देहधातुक्षयावहम् ॥ ५५८ ॥

श्रुत्वेति नन्दनं राज्ये मदनावलिसंभवम् ।
संस्थाप्य सूरिपादान्ते श्रीवत्सो जगृहे व्रतम् ॥५५९॥
सोऽभ्यस्य द्विविधां शिक्षां दक्षः कक्षीकृतक्रियः ।
विशेषतस्तपस्तप्तुं त्रैविध्येन प्रचक्रमे ॥ ५६० ॥
यथा यथा तपो देहतनुतां तनुते तनौ ।
तथा तथाऽस्य सद्भावमहिमा नहि हीयते ॥५६१॥
परितक्ष्य तपष्टङ्कैः शिलामिव निजां तनूम् ।
उच्चकार तथा सोऽभूद् यथा जङ्गमदैवतम् ॥५६२॥
आयुःक्षये स राजर्षिर्गृहीत्वाऽनशनं चिरात् ।
एकावतारस्त्रिदशो जज्ञे तस्माच्च सेत्स्यति ॥५६३॥
विद्याविलासराजर्षिर्यथा तेपेतरां तपः ।
तथाऽन्यैरपि भावेन पालनीयं महाबल ! ॥५६४॥
ततो महाबलो राजा जगादेति कृतस्मितम् ।
करिष्यामि तपः शुद्धं स्वामिन् ! विद्यानरेन्द्रवत्॥५६५॥
दानशीलतपोधर्मा अमी भावं विना त्रयः ।
न फलन्ति महीपाल ! शाला इव ऋतुं विना ॥५६६॥
यद्वद् रूपं दृशा यद्वदलङ्कृत्या कवेर्वचः ।
यद्वच्चन्द्रो युता तद्वद् धर्मो भावेन भूष्यते ॥ ५६७ ॥
भविनो भावनैवैका मुक्तिसङ्गमदूतिका ।
भवे भवेदिहैवाऽऽशु दृढप्रहारिसाधुवत् ॥५६८॥
तथाह्यासीत् पुरे कश्चिद् महाकोपी द्विजात्मजः ।
अन्यायकारिणामाद्यो यौवनं चाप्युपाययौ॥५६९॥
ग्रन्थिभेदं व्यधत्तोच्चैः स कदाचन मन्यवत् ।
कचिच्च खानखात्राणि लोलः कोल इवानिशम् ॥५७०॥
अवध्यत्वादसौ राजन्नृभिर्निर्वासितः पुरात् ।
अथाऽगाच्चौरभूपल्लीं चौरीहल्लीसकाकुलाम् ॥५७१॥
चौरसेनापतिं शश्वत् सेवते स्म द्विजात्मजः ।

स्थानलाभात् कृतार्थं स्वं मन्यमानो मनोऽन्तरे ॥५७२॥
तैस्तैरुदग्रचरितैरात्मतुल्यं विलोक्य तम् ।
अमन्यत सुतत्वेन चौरसेनापतिः स्वयम् ॥५७३॥
दस्युस्वामिनि पञ्चत्वमुपेयुषि स दस्युभिः ।
तत्पदे स्थापितश्चण्डकर्माऽजनि विशेषतः ॥५७४॥
सुदृढं प्रहरत्येष प्राणिनो निष्कृपं यतः ।
ततो दृढप्रहारीति सान्वयं नाम [1]निर्ममे ॥ ५७५ ॥
बभञ्ज नगराण्येष जग्राह पथिकव्रजान् ।
ग्रामान् प्रज्वालयामास पङ्क्तिकार्थं कृताग्रहः ॥५७६॥
अन्येद्युस्तस्करैः सार्कं स्वांशैरिव [2]पृथग्गतैः ।
भङ्क्तुं कुशस्थलं ग्राममगादेष महाभुजः ॥५७७॥
तत्रास्ति देवशर्मेति ब्राह्मणः शर्मवर्जितः ।
स्वाङ्गवत् सहजं यस्य दौर्गत्यं प्रसृतं चिरम् ॥५७८॥
तदैव बालकैरेष क्षीरान्नं याचितो द्विजः ।
बालका न हि जानन्ति सदसत्त्वं निजौकसि ॥५७९॥
यतः—
दस्यवो डिम्भरूपाणि राजानश्च द्विजा अपि ।
परपीडां न जानन्ति गृह्णते च यथा तथा ॥ ५८० ॥
परिभ्रम्याऽखिलं ग्रामं याचित्वा च कचित् पयः ।
कचिच्च तन्दुलान् स्त्यानीभूतेन्दुकिरणानिव ॥५८१॥
क्वापि क्वापि गुडं हृद्यमभ्यर्थ्य स्वस्तिभाषणात् ।
क्षैरेयीं पाचयामास स्नातुं चागाद् नदीरये ॥५८२॥
इतश्चोग्रदशो गेहमागच्छंस्तस्य तस्कराः ।
तेषामेकतमोऽनश्यत् क्षैरेयीं प्राप्य रङ्कवत् ॥५८३॥
अथो चौर्डिम्भरूपाणि चक्रन्दुर्विरसस्वरम् ।
उदितं रुदितं ह्यस्त्रं बालानां योषितामिव ॥५८४॥

---

१ निर्मितमित्यपि पाठः । २ पृथग्गतैरिति च ।

रुदन्तस्ते नदीं गत्वा तूर्णं जनकमूचिरे ।
केनचित् पश्यतां तात ! जह्रे नः पायसं गृहात् ॥५८५॥
तदाकर्ण्याऽदधाच्चित्ते दैवं दुर्बलघातकम् ।
अन्येषु वेश्मसु ग्रामे दुर्भिक्षं किं विजृम्भते ? ॥५८६॥
क्रुध्यन्नथ द्विजस्ताम्रवदनो ग्रामणीयिवान् ।
भुजाभ्यां परिघं प्रेतभर्तुर्दण्डमिवायतम् ॥५८७॥
आदाय गेहमागत्य स भूत इव नूतनः ।
समुल्लासितदोर्दण्डो जघान स्तेनमण्डलम् ॥५८८॥ (युग्मम्)
दृष्ट्वा वित्रस्यतश्चौरांस्तेन वातेन तूलवत् ।
दधावे तस्कराधीशो यमदूत इव स्वयम् ॥ ५८९ ॥
सत्वरं धावमानस्य प्रवाहस्य शिला यथा ।
अन्तराले बभूवाऽस्य सौरभेयी गतिच्छिदे ॥५९०॥
प्रेरित इव दुर्गत्याऽधिष्ठित इव रक्षसा ।
निष्कृपस्तां कृपाणेन निजघान निषादवत् ॥५९१॥
तस्कराणामधीशस्य संमुखीनोऽभवद् द्विजः ।
मृगो मृगाधिपस्येव शिशुपालनतत्परः ॥५९२॥
रे ! रे ! तस्कर ! मद्वेश्म विशन् मूर्ख ! मुमूर्षसि ।
शापेनापि ममाऽनन्ताः क्षयं नीता वधं विना ॥५९३॥
तदाकर्ण्याऽथ चौरेशो मण्डलाग्रेण चोग्रधीः ।
फलवत् पातयामास शिरो रोराद्विजन्मनः ॥५९४॥
आः पाप ! पापिनामाद्य ! ब्रह्महत्याविधायक ! ।
एवमुक्त्वाऽभ्यगादस्य वेलामासवती वधूः ॥५९५॥
दुर्गतेः सङ्कदूतेन धौतेन तरवारिणा ।
विददारोदरं तस्याश्चण्डः कूष्माण्डखण्डवत् ॥५९६॥
गर्भं जरायुमध्यस्थं कम्पमानं भयादिव ।
निरीक्ष्य पुरतस्तस्य करुणा तरुणायते ॥५९७॥

१ –नस्ताम्रपौत्रवदित्यपि पाठ । २ –रानमुष्माकूकपूलवदिति च ।

हा मातस्तात ! हा ! मातर्विलपन्त इति स्फुटम् ।
एते स्तनन्धया मोहाद् मयैव निहताः खलु ॥५९८॥
पितृमातृपरित्यक्ताः किमु जीवन्ति बालकाः ? ।
कठोरेण कुठारेण विलूनाः पल्लवा इव ॥ ५९९ ॥
गोब्रह्मवनिताभ्रूणहत्यामित्यादधद् भृशम् ।
पातकं पातकं जन्तोर्धिगार्जयमनार्यवत् ॥६००॥
स्वयं स्वं हन्मि किं शस्त्र्या कूपे झम्पां ददामि किम् ?।
विशामि ज्वलने किंवा विषादाद् विषमद्मि किम् ?॥६०१॥
एवं विचिन्तयन्नेष जातवैराग्यभावनः ।
व्यावर्तमान उद्याने स्थितान् साधूनवैक्षत ॥६०२॥
प्रणिपत्येति तानूचे पापात्माऽहं दुराशयः ।
दृशाऽप्यदृश्यो वचनैरभाष्योऽहं भवादृशैः ॥६०३॥
नास्ति मत्तः क्वचित् पापी नास्ति मत्तोऽपि निर्घृणः ।
नास्ति मत्तोऽपि निर्धर्मा नास्ति मत्तोऽधमाधमः॥६०४॥
ईदृक्षमपि मां त्रातुं यूयमर्हत सांप्रतम् ।
प्रायश्चित्तरहस्यज्ञाः सर्वसाधारणा यतः ॥६०५॥
ततस्ते साधवः साधुधर्मतत्त्वमुपादिशन् ।
श्रामण्यमेष जग्राह पापपङ्कनदीरयम् ॥६०६॥
यस्मिन्नह्नि स्वतोऽन्यस्मादपि स्मर्तास्मि पातकम् ।
तत्र तत्रैव नो भोक्ष्ये कृतपर्वतपा इव ॥६०७॥
कर्तास्मि क्षान्तिमक्षूणामित्यभिग्रहयोर्युगम् ।
अग्रहीदेष शुद्धात्मा भववैराग्यरञ्जितः ॥६०८॥
अथावस्कन्दिते ग्रामे तस्मिन्नेव कुशस्थले ।
विजहार महासत्त्वः कर्मक्षयकृताग्रहः ॥६०९॥
विधायैष महापापी नटवद् वेषमोचनम् ।
पुनर्लुण्टयितुं ग्राममाययौ हेरिकोपमः ॥६१०॥

१ –मनाजवः इति च ।

रे ! भ्रूणादिमहापापकारकोऽपि न मारितः ।
दर्शनव्याजतोऽस्माभिरित्यतर्ज्यत तैर्जनैः ॥६११॥
भिक्षार्थं प्रविशन्नेष ग्रामवेश्मसु संयमी ।
कीटकैर्भक्षितश्चैव लोष्टखण्डैरताड्यत ॥६१२॥
विशेषतस्ताड्यमानस्तत्पापं संस्मरन्नसौ ।
नाभुङ्क्त किमुत क्षान्तिं विधत्ते स्म दिवानिशम् ॥६१३॥
यष्टिभिस्ताडयामासुस्तं दुर्दान्तमहोक्षवत् ।
जघ्नुश्च मुष्टिभिः कामं वपुर्गुल्मविधायकम् ॥६१४॥
कायोत्सर्गस्थितं ग्राम्याः पिदधुः पांशुवृष्टिभिः ।
देशारिष्टसमुद्भूता उत्पाता इव पत्तनम् ॥६१५॥
इत्थं कदर्थ्यमानोऽसौ ग्रामीणैः प्रतिवासरम् ।
एवं विभावयामास मुच्यमानरजोगुणः ॥६१६॥
दूयसे किमु रे ! जीवाऽनर्गलैः खलु जल्पितैः ।
प्रदत्तं लभ्यते नैवाऽप्रदत्तं हि कदाचन ॥६१७॥
शुभेतरपरीणामाकृष्टमेतत् तवाऽऽगतम् ।
तेनार्जितं स्वयं भोक्ता हेतुमात्रं परः पुमान् ॥६१८॥
यदुपात्तं त्वया पापं भोग्यं जननकोटिभिः ।
तदिहैव शुभस्वान्तो भोक्ष्यसे क्षणमात्रतः ॥६१९॥

यतः–

अज्ञानी यत् कृतं कर्म क्षिपेद् वत्सरकोटिभिः ।
तज्ज्ञानी गुप्तिसंपूर्णः क्षिपेदुच्छ्वासमात्रतः ॥६२०॥
जात्यरत्नमिवाऽवाप्तं प्राप्य चारित्रमद्भुतम् ।
क्षमेन जयकर्माणि शर्माण्यपि तथाऽर्जय ॥६२१॥
प्रथमं कटुकं पश्चात् पीयूषति यथौषधम् ।
तथा ग्राम्यवचो जीव ! विचिन्तय सचेतनः ॥६२२॥
कर्मक्षयसखा तेऽसौ जीव ! मा क्लीबतां भज ।
एतत्साहाय्यतः सर्वकर्मनिर्मूलकोऽसि यत् ॥६२३॥

चिरं सहित्वा दुःखानि त्वं चेद् नेदं सहिष्यसे ।
तद् वृथा प्राक्तनं सर्वं मतिर्याऽन्ते हि सा गतिः ॥६२४॥
यादृक् कर्म कृतं जीव ! भंज तादृगवेदनम् ।
न शालिर्लूयते क्वापि वपने कोद्रवस्य यत् ॥ ६२५ ॥
वदनच्छायया कर्म यथा जीव ! त्वयाऽर्जितम् ।
मामेव बिभृहीदानीमेकरूपा महत्तराः ॥६२६॥
एवं भावयतस्तस्य भावनाशुद्धचेतसः ।
उत्पन्नं केवलज्ञानं लोकालोकप्रकाशकम् ॥६२७॥
निःशेषक्षीणकर्मांशोऽयोगिस्थो योगिनां वरः ।
दृढप्रहारी भगवान् प्रपेदे परमं पदम् ॥ ६२८ ॥
भावनायाः फलं राजन् ! न सम्यग् वक्तुमीश्वरः ।
यदीदृशोऽपि तमसः परं पदमवाप्तवान् ॥ ६२९ ॥
इत्यादितीर्थकृद्धर्मं श्रावं श्रावं महाबलः ।
रोमाञ्चैरञ्चितो देहे भावनाऽम्भोदबिन्दुभिः ॥६३०॥
अथाऽचलादयोऽप्यूचुर्नृपमित्रा मुनीश्वरम् ।
व्रतं वयमपि प्रीत्या ग्रहीष्यामो नरेन्द्रवत् ॥६३१॥
यावद् राज्येऽङ्गजं न्यस्य समागच्छामि सत्वरम् ।
भवद्भिस्तावदत्रैव स्थेयं मयि कृपापरैः ॥६३२॥
अथ प्रोवाच भगवान् वरधर्मा मुनीश्वरः ।
देवानुप्रिय ! मा कार्षीः प्रमादं श्रेयसः कृते ॥६३३॥
प्रभो ! प्रमादः सुतरां तदैव तत्यजे मया ।
यदैव भवतां वाणी सुश्रुवे तत्त्वसारिणी ॥६३४॥
अथ नत्वा गुरुं गत्वा पर्षदं जगतीपतिः ।
बलभद्रकुमारस्याभिषेकार्थं कृतोद्यमः ॥६३५॥
पप्रच्छाऽष्टाङ्गनिमित्ततत्त्वज्ञं गणकोत्तमम् ।
ब्रूहि लग्नं यथा शुद्धं राज्यलक्ष्मीप्रवर्धकम् ॥६३६॥

१ भव तादृगवदने इति पाठान्तरम् ।

अथो विचार्य संस्थाप्य लग्नं धरणिमण्डले ।
नैमित्तिक उवाचो[1]च्चैर्ज्योतिःशास्त्रमहोदधिः ॥६३७॥
पातेन लत्तया वेधो ग्रहैकार्गलादिभिः ।
दोषैरेभिर्विनिर्मुक्तं रोगैरिव कलेवरम् ॥६३८॥
त्यक्तक्रूरग्रहग्रामं क्रूरालिङ्गितमेव च ।
वारस्य जन्मभं यत्तु तस्माच्च दशमं परम् ॥६३९॥
अष्टादशं तथैकोनविंशैकविंशमेव च ।
वर्जनीयं मया प्रोक्तं नक्षत्रं क्षितिवासव ! ॥६४०॥
( त्रिभिर्विशेषकम् )

सक्रूरा जन्मभूर्दग्धा तारा साम्यवती तथा ।
त्रिदिनस्पर्शिनी चापि रिक्ता भद्राऽन्विता तथा ॥६४१॥
संक्रान्तिग्रहणाभ्यां च हीनकालमुखी तिथिः ।
अद्यानेकगुणा राजन् ! पुण्या तिथिरिवागता ॥६४२॥
राहुकेतुयमच्छाया क्रूरवारस्तथैव च ।
दिनवारारिहोरा च क्रूरवारस्य सा पुनः ॥६४३॥
यमघण्टकर्कयोगावुत्पातो मृत्युकाणकौ ।
संवर्तक इति दोषा वारेऽस्मिन् सन्ति न क्वचित् ॥६४४॥
विष्कम्भगण्डशूलाश्चातिगण्डो वज्रवैधृती ।
व्याघातः परिघश्चापि व्यतीपातयुता नव ॥६४५॥
एतैर्योगैः परित्यक्तं शुभयोगैः परावृतम् ।
कुनामकालदण्डाद्युपयोगैरुज्झितं दिनम् ॥६४६॥
मुहूर्तं पावनं राजन् ! बववालवकौलवैः ।
त्रिसंख्यैः करणैर्हृद्यैस्त्रिलोकीशत्वसूचकैः ॥६४७॥
अजन्ममासि निर्मुक्तधनुर्मीनस्थभास्करम् ।
असिंहस्थसुराचार्यं लग्नमेतद् मनोहरम् ॥६४८॥
मघा पुनर्वसुः पुष्यो हस्तः स्वातिश्च रेवती ।

[1] -रिवाह्मनेति च पाठः ।

रोहिणी श्रवणं चैव धनिष्ठा चोत्तरात्रयम् ॥६४९॥
मृगशीर्षं तथा मूलमनुराधा नराधिप ! ।
पञ्चदशापि ऋक्षाणि प्रतिष्ठायां शुभान्यहो ! ॥६५०॥
शन्यर्कक्षितिजाः षष्ठतृतीयस्थाः शुभावहाः ।
द्वित्रिस्थश्चन्द्रमाः श्रेष्ठः सर्वकार्यप्रसाधकः ॥६५१॥
एकद्वित्रिचतुष्पञ्चदशमस्थो बुधो मतः ।
एकद्वित्रिचतुष्पञ्चनवसप्तदशस्थितः ॥६५२॥
गुरुः शुभतरः प्रोक्त एकपञ्चचतुःस्थितः ।
नवचतुर्दशस्थश्च शुक्रः प्रीतिकरः सताम् ॥६५३॥
केतुविधुन्तुदौ नूनमेकादशगतौ शुभौ ।
प्रतिष्ठायां ग्रहा एते लग्नस्यातिशयप्रदाः ॥६५४॥
श्रुत्वेदमुचितं दत्त्वा तेभ्यः स्वं क्षितिवासवः ।
लग्नेऽस्मिन्नेव राज्ये श्रीबलभद्रं न्यवीविशत् ॥६५५॥
अथाधिरूढशिबिको नरेन्द्रः श्रीमहाबलः ।
मुनिपादरजःपूतं महोद्यानमुपेयिवान् ॥६५६॥
स्वपदन्यस्तसत्पुत्रोऽथाऽचलो निश्चलाशयः ।
गुणैः स्थैर्यादिकैर्वर्यैर्धरणो धरिणीयितः ॥६५७॥
सप्तक्षेत्र्यां धनं न्यस्य पूरणोऽप्यनृणो नृणाम् ।
वसुभिः पूरयन् विश्वं वसुर्वसुरिव श्रिया ॥६५८॥
वैश्रमणः श्रमणत्वे बद्धकक्षो महामतिः ।
अभिचन्द्रस्तु निस्तन्द्रो गुरुशुश्रूषणाशया ॥६५९॥
सर्वेऽप्यमी यथा वित्तं ददाना भावनोद्धताः ।
शिबिकास्था गुरोः पार्श्वे व्रतमाप्तुमुपागमन् ॥६६०॥
( चतुर्भिः कलापकम् )
अथाऽवामान् वामपार्श्वे कृत्वैतान् विधिपूर्वकम् ।
धर्मध्वजादि तत् सर्वमदादथ मुनीश्वरः ॥६६१॥

पञ्चभिर्मुष्टिभिः केशान् मूर्तिमद्विषयानिव ।
स्वयमुत्पाटयामासुरेते गुरुनिदेशतः ॥६६२॥
सामायिकमहामन्त्रं पात्रं निःश्रेयसश्रियाम् ।
गुरोरुच्चारयामासुस्ते पीयूषकिरा गिरा॥६६३॥
तत्कालमाप्तसाधुत्वलिङ्गिनोऽपि तपोधनाः ।
संवृताङ्गाः समाधिस्थाश्चिरंदीक्षितवद् बभुः ॥६६४॥
प्रदक्षिणात्रयीं दत्त्वा प्रणिपत्य गुरुक्रमौ ।
उपाविक्षन् पुरस्तात् ते विनयाऽऽनम्रकन्धराः॥६६५॥
अथोपश्लोकयामास गुरुस्तद्भाववृद्धये ।
असारेऽपि भवे सारं श्रामण्यं मुक्तिपूरथः ॥६६६॥
चक्रित्वं त्रिदशत्वं च नृपत्वमहमिन्द्रता ।
विदन्तु सुलभं चैवद् दुर्लभं तु जिनव्रतम् ॥६६७॥
यतः—
एकाहमपि निर्मोहः प्रव्रज्यापरिपालकः ।
न चेद् मोक्षमवाप्नोति तथापि स्वर्गभाग् भवेत्॥६६८॥
किं पुनस्ते महाभागास्त्यक्त्वा तृणमिव श्रियम् ।
आद्रियन्ते परिव्रज्यां सुचिरं पालयन्त्यपि ? ॥६७९॥
इति विनयविनम्रा देशनां पावनां तां
कुमततिमिरवीथीभास्वदंशुप्रकाराम् ।
श्रुतिपथमुपनीय प्रीतिभाजो मुनीन्द्रा
विदधति मुदमेते सप्त साम्यैकतानाः ॥ ६७० ॥

इति श्रीविनयचन्द्रसूरिविरचिते श्रीमल्लिस्वामिचरिते विनयाङ्के महाकाव्ये दान-शील-तपो-भावनासु जिनदत्त-वनमाला श्रीविद्याविलासक्षितिपति-श्रीदृढप्रहारिमहर्षिकथागर्भित श्रीमहाबलराजर्षि-अचल-धरण-पूरण-वसु-वैश्रमणा-ऽभिचन्द्रव्रतमहोत्सव-व्यावर्णनो नाम द्वितीयः सर्गः ।

अर्हम्

# अथ तृतीयः सर्गः ।

अथ स्वगुरुणा साकमवियुक्ता गुणा इव ।
सत्त्वराशिहितोत्कृष्टा विजह्रुस्ते तपोधनाः ॥ १ ॥
गुर्वाज्ञामिव समिती रक्षन्तस्ते यथाविधि ।
अभजन्ततरां साम्यं निःसीमाचरणप्रियाः ॥ २ ॥
कायोत्सर्गजुषामेषां स्कन्धकण्डूयनं मृगाः ।
विदधुर्निशितैः शृङ्गैस्तीक्ष्णैर्वासीमयैरिव ॥ ३ ॥
क्षुधार्ता अप्यमी धीराः कुर्वाणा दुस्तपं तपः ।
एषणा न व्यलङ्घन्त निजच्छाया इवाङ्गिनः ॥ ४ ॥
अरण्यानीपथि भ्रान्ता बाढं पिपासिता अपि ।
नो ववाञ्छुर्जलं शीतं स्फीतं पीतामृता इव ॥ ५ ॥
शीतेन बाध्यमानास्ते तुषारकणवाहिना ।
ईषुर्नो ज्वलनज्वालां ग्रीष्मसन्तापिता इव ॥ ६ ॥
उष्णेन दह्यमानाङ्गा न च्छायां फलिनस्य ते ।
अस्मरन् कायमानस्थाः सुस्था इभ्यजना इव ॥ ७ ॥
मशकैरपि संदष्टा अयःशूचीमयैरिव ।
नोद्वेगं विदधुः क्वापि न द्वेषं च मनागपि ॥ ८ ॥
इत्थं परीषहचमूं जयन्तस्ते तपोधनाः ।
वीतशोकां पुरीं जग्मुर्गुर्वादेशवशंवदाः ॥ ९ ॥
तदागमनकल्याणमुद्यानतरुरक्षकः ।
तत्क्षणात् कथयामास जयेत्याशीःपुरःसरम् ॥ १० ॥
ततः प्रकृतिभद्रोऽसौ बलभद्रः क्षितीश्वरः ।
तान् वन्दितुमगाद् भक्त्या पौरलोकैरलङ्कृतः ॥११॥

---

१ –युक्ता इति ग ।

वन्दित्वा स्वोचिते स्थाने निषण्णे पृथिवीभुजि ।
तेषां मुख्योऽवदद् वाग्मी महाबलमहामुनिः॥ १२ ॥
अनादिमूलपर्यन्तः संसारो नाम पत्तनम् ।
विना केवलिनं यस्य स्वरूपं न निगद्यते ॥ १३ ॥
यस्मिन् देवकुलायन्ते सौधर्माद्याः सुरालयाः ।
पण्याकुलापणायन्ते कर्माऽकर्मभुवोऽखिलाः ॥ १४ ॥
शैवा वैशेषिका बौद्धाः कापिला नास्तिका अमी ।
वाणिज्यकारकायन्ते यत्र चाटुविचक्षणाः॥ १५ ॥
मोहो वप्रायते यत्र तृष्णोच्चैः परिखायते ।
विशालविशिखायन्ते सुखासुखसमागमाः ॥ १६ ॥
शब्दाद्या विषया यत्र पञ्चामी पद्रदेवताः ।
विशालकाननायन्ते जन्तुदेहाः समन्ततः ॥ १७ ॥
तत्र कर्मपरीणामो नाम भूपो महाबलः ।
यदाज्ञा माल्यवत् सर्वैरुह्यते नृसुरैरपि ॥ १८ ॥
सर्वत्राऽलङ्घ्यरचना वचनाऽगोचरोद्यमा ।
तस्याग्रमहिषी कालसङ्गतिर्गतिशोभना ॥ १९ ॥
देवपूजापरः शान्तः शोभनः स्वप्नसूचितः ।
अल्पक्रोधोऽल्पमानोऽल्पमायोऽल्पाहङ्कृतिः कृती २०
आस्तिकः सात्त्विकः प्राज्ञः शुभमार्गप्ररूपकः ।
भव्यो नाम तयोः पुत्रः पवित्राचरणप्रियः॥ २१ ॥
( युग्मम् )

कलही क्लिष्टकर्मज्ञो महामोहसखः खलु ।
निगोदपृथ्वीकायादिस्थितितत्त्वकृतोत्सवः ॥ २२ ॥
पुद्गलानां परावर्तक्षायसेवाधिरक्षकः ।
अभव्यनामा समभूद् द्वितीयश्च तयोः सुतः ॥ २३ ॥
( युग्मम् )

क्रमाद्यौवनं भव्येतरं पुत्रं विलोक्य सा ।

चिन्तासन्तानविधुरा समजायत जातुचित् ॥२४ ॥
तामालोक्य महीपालो बभाषे सुभगोत्तमे ! ।
कथं चिन्तापराऽसि त्वं ब्रूहि वर्णैः सुकोमलैः ? ॥२५॥
देवाऽभव्यसुतः प्राप्तयौवनोऽपि कथं त्वया ।
उत्तमकुलनन्दिन्या साकं नो परिणाय्यते ?॥ २६ ॥
अथोवाच नृपः सुष्ठु स्मारितोऽस्मि सुलोचने ! ।
अनेककार्यनिघ्नस्य विस्मृतिर्मे गरीयसी ॥ २७ ॥
ततः क्लिष्टाशयं नाम दैवज्ञं कर्मभूपतिः ।
आजूहवत् प्रतीहारप्रेषणात् सर्वकार्यवित् ॥ २८ ॥
तस्मिन्नुपागते राजा बभाषे वदतां वरः ।
ज्ञानादभव्यपुत्रस्य स्नुषां योग्यां निवेदय ॥ २९ ॥
ज्ञानात् सम्यग् विचार्योच्चैः क्षणं स्थित्वा जगाद सः ।
अस्ति कालप्रतिष्ठाख्यमव्यवहारपत्तनम् ॥ ३० ॥
तत्रानादिवनस्पतिनामा राजति राजराट् ।
अनन्तकालचक्राख्या तस्य प्राणप्रिया प्रिया ॥३१॥
तीव्रमोहोदितिर्नाम तयोरेका तनूद्भवा ।
यस्या रूपमतिशायि न द्रष्टुमपि पार्यते ॥ ३२ ॥
अमुं भव्येतरं पुत्रं तया योजयसे यदि ।
स्वर्णं सुरभि जायेत रत्नं स्वर्णेन योज्यते ॥ ३३ ॥
श्रुत्वेदं नास्तिको नाम दूतो भूमीभुजा स्वयम् ।
प्रेषितस्तस्य सामीप्ये स प्रणत्येत्यवोचत ॥ ३४ ॥
मन्मुखेन मम स्वामी स्वामिन् ! व्याहरते वचः ।
निजां मोहोदितिं पुत्रीं मत्पुत्राय प्रयच्छत ॥ ३५ ॥
युवयोर्यद्यपि स्नेहः कुलक्रमसमागतः ।
तथापि तं स्थिरीकर्तुं संबन्धः क्रियतेऽधुना ॥३६॥
वनस्पतिरथोवाच विस्मिताननपङ्कजः ।
लुलोठ स्वर्धुनीमध्ये नालस्योपहतस्य मे ॥ ३७ ॥

अस्रंभाव्यमभाग्यानां मनोरथशतेऽपि यत् ।
तदेतन्मम संपन्नं पात्रजामातृलाभतः ॥ ३८ ॥
श्रीमत्कर्ममहीपालसमादेशः सुदुर्लभः ।
सुचिरं विधृतो मौलौ हरिचन्दनदामवत् ॥ ३९ ॥
ताम्बूलवस्त्रपात्राद्यैः पूजयित्वा समुत्सुकैः ।
मुख्यं संख्यावतां मध्ये आत्मानं मन्यते स्म सः॥४०॥
नास्तिकोऽथ समागत्य निःशेषं कर्मभूभुजः ।
तदुक्तं कथयामास संयोज्य करकुड्मलम् ॥ ४१ ॥
तद्वचःश्रवणादेव जातरोमाञ्चकञ्चुकः ।
आजूहवन्निमित्तज्ञं क्लिष्टं क्लिष्टाशयाभिधम् ॥ ४२ ॥
दैवज्ञ ! वद सल्लग्नं परमोच्चग्रहान्वितम् ।
यत्प्रभावेण मत्पुत्रो जायतेऽनन्तसन्ततिः ॥ ४३ ॥
दैवज्ञः पट्टके न्यस्य ग्रहचक्रं यथाविधि ।
देवायुष्मादिनाल्लग्नं पञ्चमेऽह्नि विमृश्यताम् ॥ ४४ ॥
ततः शुभतरं लग्नं वत्सरान्ते महीपते ! ।
विलम्बः पुण्यकार्याणां न क्षोणीश ! विधीयते ॥४५॥
मिथ्यादर्शननामानं मन्त्रिणं पृथिवीश्वरः ।
तत्क्षणं प्रेषयामास समीपे श्रीवनस्पतेः ॥ ४६ ॥
वनस्पतिमहीभर्तुः पुरतः कर्ममन्त्रिराट् ।
नैकट्यं कथयामास लग्नस्योत्तमताजुषः ॥ ४७ ॥
वनस्पतिरथ प्रोचे प्रमाणमिदमस्तु भोः ! ।
सत्वरं कारयिष्यामि विवाहस्योचितं विधिम् ॥४८॥
यतः—देवानां मनसा सार्कं पार्थिवानां गिरा समम् ।
धनिनामर्थदानेन कार्यं स्यात् क्षणमात्रतः ॥ ४९ ॥
अथादिक्षत् नृपो भृत्यान् निगोदान् बादरानसौ ।
क्रियन्तामिन्दुविशदाः पताकास्य हि पर्वताः ॥ ५० ॥

---
१ महीपाल इत्यपि ।

आज्यैः प्राज्यैः प्रपूर्यन्तां महावाप्यः पदे पदे ।
वररूपैः सुचित्राढ्यैर्मण्डपा अपि वेश्मनाम् ॥ ५१ ॥
भवितव्यताप्रभृतिः सर्वः सुवासिनीजनः ।
पर्पटादिकृते भूयात् कलोलुलुस्वरोत्तरम् ॥ ५२ ॥
लेख्यन्तां गोत्रिणां लेखा विवाहाऽह्नोनिवेदिनः ।
कुङ्कुमैः क्षुल्लकभवग्रहणाभिधलेखकैः ॥ ५३ ॥
अथ संप्रेषितो राज्ञा मन्त्री प्राप्य पुरं निजम् ।
विवाहप्रगुणः स्वामिन् ! जज्ञेऽनन्तवनस्पतिः ॥५४॥
उन्मार्गदेशकाभिख्या वराकृष्टिविधायिनः ।
संसारपत्तनं प्रापुर्वनस्पतिनिदेशतः ॥ ५५ ॥
प्रवेशिता महोत्साहपूर्वकं कर्मभूभुजा ।
नृत्वाऽभिधानमावासमास्थिताः समदेक्षणाः ॥ ५६ ॥
मर्मोद्घट्टनया वध्वा कृतस्नानमहोत्सवाः ।
क्षारसूपकृता नीता दुर्वाक्रसवतीगृहे ॥ ५७ ॥
विन्यस्तमत्सरस्थाला अनार्याचरणादिकाः ।
द्राक् परिवेषयामासुः कुरङ्गार्भकलोचनाः ॥ ५८ ॥
भोजनान्ते नृपस्यान्ते संस्थायोन्मार्गदेशिनः ।
अमुमामन्त्रयामासुः करग्रहणपर्वणि ॥ ५९ ॥
वस्त्राद्यैस्तान् स संपूज्य जन्ययात्राकृतोद्यमः ।
स्वावासान् दापयामास निधत्तस्तम्भवेश्मनि ॥ ६० ॥
अभिगृहीतप्रभृतिभ्रातरः पञ्च दुर्जयाः ।
तत्राऽऽगच्छन् सभृङ्गारा भ्रातृव्यकरमङ्गले ॥६१॥
द्वादशारकनामानः कालसङ्गतिसोदराः ।
उपाजग्मुर्गृहीत्वोच्चैर्मातृशालाविधिक्षणम् ॥ ६२ ॥
रतिप्रियरतिप्रीतिगीयमानोरुमङ्गलः ।
वरो भव्येतरोऽचारीद् रजःकालीकृताम्बरः ॥६३॥
आपतन्तं वरं श्रुत्वा वनस्पतिमहीपतिः ।

पुरं व्यधापयत् केतुलोलमालासमाकुलम् ॥६४॥
वनस्पतिसमादिष्टं रागाख्यं जन्यमन्दिरम् ।
हंसः सरोजवनवद्लक्ष्मकेतरां वरः ॥ ६५ ॥
कुवासनामयं तत्र धूलीभक्तं वनस्पतिः ।
सोत्साहं प्रेषयामास कामेच्छाधवलोत्तरम् ॥ ६६ ॥
निकाचिताह्वये चारुवर्णके कर्मनन्दनः ।
विन्यस्तः स्वस्तिवचनरचनाभिः पुरन्ध्रिभिः ॥ ६७ ॥
नीरङ्गीपूर्वकं श्वेतपोतप्रावृतविग्रहः ।
उन्मादाख्यं वरो नागमारुरोह यथाविधि ॥ ६८ ॥
द्रव्यक्षेत्रकालभावस्थूलसूक्ष्मविभेदिभिः ।
धवलैः पुद्गलपरावर्तैः संगीतविक्रमः ॥ ६९ ॥
द्वित्रीन्द्रियादिभिर्जीवैर्बन्दिवृन्दैरिवोच्चकैः ।
पुरःस्थैर्वर्णिताशेषगुणग्रामः पदे पदे ॥ ७० ॥
कौतुकागारसामीप्यं प्राप्य भव्येतरो वरः ।
उत्ततार द्विपादस्मात् प्रबोधादिव दुर्मतिः ॥७१॥
( त्रिभिर्विशेषकम् )

अनन्तकालचक्राख्यस्वस्राकृष्टः स्ववाससा ।
संव्यानसंपुटस्फोटं चक्रे पादप्रहारतः ॥ ७२ ॥
यथाप्रवृत्तिनामाख्यां कुलदेवीं प्रणम्य सः ।
मोहोदयवधूतारामेलकं विदधे तदा ॥ ७३ ॥
अनादिभवरूपेण कृतज्ञेन द्विजन्मना ।
कारितः करसंयोगोऽनयोर्मन्त्रपुरःसरम् ॥ ७४ ॥
वनस्पतिमहीपालः करमोचनपर्वणि ।
भववेद्याभिधां विद्यां ददावक्षयकारिणीम् ॥ ७५ ॥
वृत्ते विवाहमङ्गल्ये दशाऽहानि महोत्सवात् ।
स्थित्वा वरः समागच्छद् निजं संसारपत्तनम् ॥७६॥
भुञ्जानः पञ्चधा भोगान् तया साकं नरेन्द्रजः ।

अमूत नन्दनान् पञ्च विकारान् विदितान् भुवि ॥७७॥
आसन्नदूरसिद्धिकवेश्मान्येष दिवानिशम् ।
उपाद्रोषीत् सुतैः साकं पञ्चभिर्वामचेष्टितैः ॥ ७८ ॥
आसन्नदूरभव्याद्या मिलित्वा तैरुपद्रुताः ।
आगमन् कर्मभूमीशसमीपे प्राभृतोत्तराः ॥ ७९ ॥
प्रणम्य कर्मभूपालं तत्सर्वं ते व्यजिज्ञपन् ।
परैर्हि परिभूतानां सर्वेषां पार्थिवो गतिः ॥ ८० ॥

यदूचे–

दुर्बलानामनाथानां बालवृद्धतपस्विनाम् ।
अन्यायैः परिभूतानां सर्वेषां पार्थिवो गतिः ॥८१॥
तं निशम्याऽवदद् भूमान् रे रे नगरवासिनः ! ।
मद्वल्लभसुतस्यायमन्यायः पूत्कृतः कथम् ? ॥ ८२ ॥
यद्यन्ममाङ्गभूर्लोकान् गृह्णाति गृहमध्यतः ।
तत्तस्य शेषमन्यस्य प्रसाद इति यत्कृतः ॥ ८३ ॥
यद्यत्र स्थातुमीशा न ततो गच्छत मे पुरात् ।
नगरस्य न कोणेऽपि ममायं कूणयिष्यति ॥ ८४ ॥
ततः कलिः प्रतीहारः संज्ञितो नेत्रसंज्ञया ।
तानर्द्धचन्द्रयामासानाथानिव नृपाग्रतः ॥ ८५ ॥
ते खिन्नमानसा दीनवदना भ्रष्टबुद्धयः ।
विमृश्य सुचिरं चित्ते भव्यप्रासादमासदन् ॥८६॥
तानायातांश्चिरं दृष्ट्वा मुहुः स्नेहलचेतसा ।
अभ्युत्थानमलञ्चक्रे सर्वस्याभ्यागतो गुरुः ॥ ८७ ॥
किञ्चिदुच्छ्वसितास्तेऽथ प्रदत्तद्रविणा इव ।
प्राणमन् कर्मभूपालकुमारं परया मुदा ॥८८॥
कर्मणा विहितं यच्च तेऽजल्पन्नपमाननम् ।
सुहृदां कथितं दुःखं लघूभवति निश्चितम् ॥ ८९ ॥

समीपवर्ती तन्मित्रं सदागम इति श्रुतः ।
द्वितीयं मानसमिव भव्यस्य नृपजन्मनः ॥ ९० ॥
निदध्यौ तन्मुखं भव्यः सोऽप्यूचे देव ! मद्वचः ।
शृण्वमीषां यथा त्राणसामर्थ्यं तव जायते ॥ ९१ ॥
अमुष्मिन् भवपाथोधौ द्विसप्तकरज्जुके ।
ग्रन्थिभेदाभिधो द्वीपोऽप्राप्तोऽभव्येतरैर्नहि ॥ ९२ ॥
अपूर्वानिवृत्तिसंज्ञकरणारक्षकान्वितः ।
कोट्टः सास्वादनो नामाऽतिक्रम्यो यः षडावलिः ॥९३॥
सम्यग्दृष्टिरिति ख्यातं तस्मिन्नस्ति महापुरम् ।
सुबोधो यत्र भूपालस्तद्भार्या बुद्धिसुन्दरी ॥ ९४ ॥
त्रिपुञ्जीकरणो नाम तस्य बन्दी महामतिः ।
यः सदा वीतरागस्य पठेद् भोगावली किल ॥ ९५ ॥
ततः परमविरतिनामाऽस्ति नगरी शुभा ।
त्रयस्त्रिंशदब्धिमानाऽनुत्तरसुरभासुरा ॥ ९६ ॥
तस्या देशविरत्याख्यो महाग्रामो विराजते ।
यस्मिन्नुपासको भव्यसंज्ञः खेलति धार्मिकः ॥९७॥
ततः सर्वविरत्याख्यं नामाऽस्ति नगरं महत् ।
यस्मिंश्चारित्रभूपालः पराक्रममहानिधिः ॥९८॥
तस्य क्षमाभिधा पट्टदेवी कोमलगीः सुधीः ।
मुनीन्द्रैरपि यद्रूपं गीयते ज्ञानगीतिभिः ॥ ९९ ॥
अस्ति तस्य महामात्यः सम्यग्दर्शनसंज्ञकः ।
मिश्राख्यः प्रणिधिर्यस्य सर्वगः पवनो यथा ॥१००॥
समीपे तस्य चेद् भव्यमहाभाग्येन गम्यते ।
अवश्यं कर्तुमस्योच्चैरपमानं हि शक्यते ॥१०१॥
निःसहायैर्महाभाग ! न किञ्चिदपि शक्यते ।
वायुना कृतसान्निध्यो दहेत् कक्षं हुताशनः ॥१०२॥

१ ममेति पाठान्तरम् ।

यतः–

असहायः समर्थोऽपि तेजस्वी किं करिष्यति ? ।
निर्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति ॥ १०३ ॥
श्रुत्वेदं निशितैः सर्वैः समित्रैः कर्मनन्दनः ।
चचाल शकुनैश्चारु प्रेरितः सुकृतैरिव ॥ १०४ ॥
प्रातस्तेषां गृहाण्येष शून्यान्यालोक्य सर्वतः ।
लोको विज्ञपयामास राजानं कोपनाऽऽशयम् ॥१०५॥
तन्निशम्य वचो राजा कोपवह्निप्रभञ्जनम् ।
आजूहवद् महामात्यं मिथ्यात्वं बहुसंमतम् ॥१०६॥
अथावादीद् महाभाग ! सनीरजलदस्वरः ।
ममाग्रे मिश्रदूतेन जगदे जगदेकधीः ॥ १०७ ॥
भव्यो भव्यसमूहेन साकं स्वामिन् ! निशीथतः ।
उच्चल्य सर्वविरतौ नगरे गतवान् खलु ॥ १०८ ॥
स च चारित्रभूपेन कृतसंमानपूर्वकम् ।
समीपे स्थापितः पुत्रवद् दृष्टश्च दिवानिशम् ॥ १०९ ॥
चारित्रभूपतेः साधु धर्मपुत्रेण सङ्गतम् ।
नीलीरक्ताम्बरमिव जज्ञे तस्याऽविनश्वरम् ११०॥
सन्मार्गदेशनानाम्नी वारवेश्या सुलक्षणा ।
तस्या गेहे स्थितो भव्यो विरागी भवतः प्रति॥१११॥
क्रमशः क्रमशस्तेन तत्पुरं कर्मभूपते ! ।
उद्वासितं सुबोधेन स्तोकलोकं भविष्यति ॥११२॥
श्रुत्वेति कर्मभूपालः क्रोधेनौष्ठदलं दशन् ।
ऊचे चारित्रभूपालं हनिष्यामि शृगालवत् ॥११३॥
मया चारित्रनामापि श्रुतमद्य महत्तम ! ।
मां मुक्त्वाऽन्यो महीपालो न क्वापि श्रूयते क्षितौ॥११४॥
अथवा कल्पवृक्षेऽपि विद्यमानेऽर्थिनां प्रिये ।
स्नुहीमहावृक्ष इति किं मूढैर्नो निगद्यते ? ॥ ११५ ॥

यस्तार्क्ष्यपक्षैः पक्षालीचिकीर्मङ्क्षु स्वसायके ।
दिग्दन्तिदन्तैः प्रेयस्याः सत्कङ्कणचिकीर्नरः ॥११६॥
सिंहस्य केशरैर्लाक्षारसदिग्धैरिवारुणैः ।
वेणीबन्धचिकीर्यश्च स मे पितृसपत्नति ॥११७॥
( युग्मम् )
दुर्नयस्य फलं सद्यो दर्शयामि रणाङ्गणे ।
मद्विक्रमकथाः सभ्याः ! वीक्षन्तां पौनरुक्त्यतः॥११८॥
अथ कर्ममहीपालः प्रज्वलन् क्रोधवह्निना ।
कुवासनाभिधां बाढं जैत्रढक्कामवीवदत् ॥ ११९ ॥
तस्या नादं समाकर्ण्य शौर्यद्रुमघनाघनम् ।
कामाद्या मण्डलाधीशाः सर्वे संनहनं व्यधुः ॥१२०॥
आहारभयसंज्ञाश्च चतस्रो यानकाहलाः ।
चतुर्दिक्षु जयायेव ताडिताः कर्मभूभुजा ॥१२१॥
कदाग्रहमयास्तत्र निःस्वानाः सस्वनुस्तराम् ।
पञ्चेन्द्रियविकाराश्च पञ्च तूर्याण्यपि स्फुटम् ॥१२२॥
अथ कर्ममहीपालः कृतप्रस्थानमङ्गलः ।
आरुरोहाभिमानाख्यं नागं नगमिवोन्नतम् ॥१२३॥
अभव्यैर्मण्डलाधीशैश्चलत्कर्मगुणैरिव ।
दूरभव्यैस्तथा वर्गपत्तिभिः परिवारितः ॥ १२४ ॥
प्रभञ्जन इवोद्दामो नस्खलत्पौरुषोत्तरः ।
ददौ योजनमानेन प्रयाणं कर्मभूपतिः ॥१२५॥
इत्थं प्रयाणकं कुर्वन् सर्वगः कर्मभूपतिः ।
ग्रन्थिभेदाभिधे द्वीपे कृतवासो व्यराजत ॥१२६॥
मिश्रनामा महादूतः प्रेरितः कर्मभूभुजा ।
सम्यक्त्वमन्त्रिणो गेहमभ्यगाच्चित्तवद् द्रुतम् ॥१२७॥
स्वामिन्! कर्ममहीपालो मन्मुखेन तवाग्रतः ।
ईदृशं कथयामासाऽवधार्य तन्मयोदितम् ॥ १२८ ॥

भव्यसार्थान्वितो भव्यकुमारो यस्त्वया धृतः ।
तत् प्रसुप्तो मृगाधीशो हतो हन्त ! चपेटया ॥ १२९ ॥
एतावताऽपि नो नष्टं किमप्यस्ति महीपते ! ।
गत्वा क्षमय निःशेषं नतिग्राह्या हि साधवः ॥ १३० ॥
इति ब्रुवाणं तं दूतं श्रुत्वा चारित्रभूपतिः ।
सहास्यमवदत् पाथःपूर्णपाथोदनिःस्वनः ॥ १३१ ॥
त्वन्नाथनगरीलोकैः सदागमविमोचितैः ।
मदीयं नगरं भद्र ! वसदस्ति निरन्तरम् ॥ १३२ ॥
अमुमर्थं तव स्वामी जानन्नपि निजे हृदि ।
कथमद्योद्यतो जज्ञे विग्रहाय समं मया ? ॥ १३३ ॥
अथवा विग्रहं मत्वा सर्वोऽपि परमण्डले ।
प्रवेशं कुरुते धीमान् कीर्तिहासोऽन्यथा भवेत् ॥१३४॥
न न्यूनं तव नाथेन तोलनीयं ममाधुना ।
इत्युक्त्वा व्यसृजद् दूतं ततश्चारित्रभूपतिः ॥ १३५ ॥
अथ प्रभावनां जैत्रढक्कां चारित्रभूपतिः ।
तत्क्षणात् ताडयामास वैरिगर्वगिरेः पविः ॥ १३६ ॥
शमसंवेगनिर्वेदप्रमुखास्तस्य भूपतेः ।
सर्वाभिसारप्रयता बभूवुर्मण्डलेश्वराः ॥ १३७ ॥
ज्ञानमौनक्रियाशीलसंपदो यानकाहलाः ।
समताड्यन्त भव्येन श्रवणप्रमदप्रदाः ॥ १३८ ॥
अथ चारु मुहूर्तेऽह्नि कृतप्रस्थानमङ्गलः ।
आरुरोह व्रतक्ष्माभृत् संयमाभिधकुञ्जरम् ॥ १३९ ॥
जैनधर्माभिधो बन्दी भावनातुरगीस्थितः ।
एवं वचोऽगदत् काममाशीर्वादपुरस्सरम् ॥ १४० ॥
जय चारित्रभूपाल ! प्रलीनाशेषकल्मष ! ।
जय भव्यजनारामवसन्तसमयायित ! ॥ १४१ ॥

१ -वर्ग- इति च पाठः ।

जय त्रैलोक्यमाणिक्य ! जय साम्यमहानिधे ! ।
जय दुर्जयदर्पोग्रकन्दर्पपवनाशन ! ॥ १४२ ॥
अहिंसा ध्यानयोगश्च रागादीनां विनिर्जयः ।
साधर्मिकानुरागश्च सारमेतत् तवाऽऽगमे ॥ १४३ ॥
अर्हन् देवो गुरुः साधुस्तत्त्वं तीर्थकरोदितम् ।
इति यस्य स्फुरत्यन्तः संसारोऽस्य करोति किम्?॥१४४॥
इत्यार्थैर्वचनैर्धारैः पूरयन् रोदसीतलम् ।
चारित्रभूपतेरग्रे प्रासरद् बन्दिसुन्दरः ॥ १४५ ॥
शुक्लध्याननरो दध्रे मूर्ध्नि च्छत्रं समुज्ज्वलम् ।
केवलज्ञाननामाऽस्य लोकालोकप्रकाशकम् ॥ १४६ ॥
आरोहकः समत्वाख्यः कुम्भिकुम्भे व्यवस्थितः ।
अन्येऽपि बलिनो योधाः सन्तोषशमसंज्ञकाः ॥१४७॥
प्रयाणकशतैर्मिश्रकोट्टदुर्गसमीपगः ।
बभूव व्रतभूपालो विहितावाससंहतिः ॥ १४८ ॥
शमस्य मार्दवस्याऽप्यार्जवसंतोषयोरपि ।
रणपट्टा अबध्यन्त श्रीमच्चारित्रभूभुजा ॥ १४९ ॥
क्रोधाहङ्कारयोर्मायालोभयोरपि तत्क्षणम् ।
कर्मक्षोणीभुजा भालेऽबध्यन्त रणपट्टकाः ॥ १५० ॥
अथ सैन्यद्वयं तत्र ढुढौके रणरङ्गतः ।
म्रियन्ते सुभटा यत्र साभिज्ञानपुरस्सरम् ॥ १५१ ॥
रणतूर्यैर्वाद्यमानैर्बन्दिकोलाहलैस्तथा ।
वीराणां सिंहनादैश्च शब्दाद्वैतमभूत्तदा ॥ १५२ ॥
शरच्छन्नपतद्दण्डैरुच्छलद्भिर्मुहुर्मुहुः ।
तदा जज्ञे सितच्छत्रैः शतचन्द्रं नभस्तलम् ॥१५३॥
रणकृत्तशिरोभिश्च हुङ्काररवभीषणैः ।
परिव्याप्तं नभो भाति वाचालैरिव राहुभिः ॥१५४॥

१ प्रहृषस्मर इति च पाठः ।

नास्त्यात्मा नास्ति देवोऽपि नास्ति काचन निर्वृतिः ।
नास्ति पुण्यं तथा पापं किन्तु भूतमयं जगत् ॥१५५॥
एकस्मिन् दृषदि न्यस्य पादद्वन्द्वमुपासकैः ।
अभ्यर्च्यते शिला त्वन्या शवमण्डनलीलया ॥१५६॥
किं तया विहितं पापं यस्या उपरि संस्थितम् ।
स्थाप्यन्ते चरणा अन्याः पूज्यास्तत्किं कृतं शुभम् ?१५७
यद् बुद्ध्यते न तत्त्वं तद् यत्तत्वं तन्न बुध्यते ।
अतत्त्वलोलुपो लोको धिग्मूर्खैर्विप्रतार्यते ॥ १५८ ॥
इत्थं वचनवीथीभिर्भल्लीभिरिव ताडिताः ।
द्रव्यश्राद्धा अभव्यैस्तैः क्षणादेव विनिर्जिताः ॥१५९॥
( चतुर्भिः कलापकम् )

अत्र चारित्रभूपालं प्रणम्य परमार्हताः ।
अभव्यैस्तैः समं योद्धुं प्रवृत्ता रणरङ्गिणः ॥ १६० ॥
यदुच्यते भवद्भिश्च नास्तीति वचनं भृशम् ।
अस्तीत्युपेक्षया तच्च घटाकोटिमुपैति भोः ! ॥ १६१ ॥
चरणस्थापनं भक्तिपूजनं यच्छिलास्वलम् ।
तत्प्रतिष्ठाफलं नाऽऽभिः पुण्यापुण्यमुपार्जितम् ॥१६२॥
इत्थं वाक्यैः सर्वलोहमयैरस्त्रैरिवोच्चकैः ।
पलायाञ्चक्रिरे वेगादभव्यास्ताडितास्ततः ॥ १६३ ॥
साकं संचारिभी राजपुत्रैः क्रमागतैरिव ।
सात्त्विकैरनुभावैश्च शान्तैः प्रहरणैरिव ॥ १६४ ॥
लीलाविलासविच्छित्तिबिब्बोकादिमविभ्रमैः ।
इत्याद्यैः सहजैर्युक्ता रागवार्द्धिहिमांशुभिः ॥१६५॥
मण्डलाधिपकन्दर्पनिदेशाद् विषया भटाः ।
स्थायिभिर्मूर्ततेजोभिरिव योद्‌धुं ड्ढौकिरे ॥१६६॥
( त्रिभिर्विशेषकम् )

तेषां दर्शनतः श्रीमद्व्रतराट्पक्षवर्तिनः ।

द्रुष्यतो यतयो नेशुः किंकर्तव्यविमोहिताः ॥१६७॥
स्वबलं भग्नमुद्वीक्ष्य बलात्कर्ममहीभुजः ।
अशिक्षतेति निर्ग्रन्थान् श्रीमच्चारित्रभूपतिः ॥ १६८ ॥
यूयं धन्या महासत्त्वा आजन्मब्रह्मचारिणः ।
यथाख्यातव्रतास्तीर्णघोरसंसारसागराः ॥ १६९ ॥
युष्मदीयं व्रतं भद्राः ! पालितं सफलं तदा ।
यदाऽमून् विषयान् घोरान् जेतारो ब्रह्मविक्रमैः॥१७०॥
अन्यथा विषयैरेभिर्ब्रह्मचर्यमहानिधिः ।
अवश्यं गृह्यते सर्वो भवतां जीवतामपि ॥१७१॥
अमुष्मिन् दुर्ग्रहे दुर्गे निर्जिते विषयाभिधे ।
भवादृशैर्निजं गोत्रमथैवाऽलं विभूष्यते ॥ १७२ ॥
एषामपि पतिः कामः प्रकामबलदुर्धरः ।
ब्रह्माद्यास्त्रिदशा येन लीलयैव वशीकृताः ॥ १७३ ॥
एतज्जयो विधातव्यः शुचिब्रह्मनिषेवणैः ।
वसतिस्त्रैणवार्तादिनवगुप्तिविशेषितैः ॥ १७४ ॥
इत्युपबृंह्य भूपालो विजितेन्द्रियसंज्ञकम् ।
ताम्बूलं प्रददौ तेषां स्वहस्तेन प्रसादवत् ॥ १७५ ॥
अथ चारित्रभूपेन समादिष्टाः समन्ततः ।
सर्वाङ्गमलसन्नाहा ब्रह्मगुप्त्यस्त्रभासुराः ॥ १७६ ॥
निरीहतातुरङ्गस्था निशातशमसेल्लकाः ।
योद्धुं ताभिः समं विष्वग् ढौकन्ते स्म प्रहर्षिताः॥१७७॥
( युग्मम् )
तेषां दर्शनमात्रेण प्रणेशुर्विषया भटाः ।
उदये तेजसां भर्तुः किमु खेलन्ति कौशिकाः ?॥१७८॥
शमः कोपमथो मानं मृदुता रणपट्टभृत् ।
मायामार्जववीरेशो लोभं तोषस्ततोऽजयत् ॥ १७९ ॥
अथ कर्ममहीपालः सार्कं चारित्रभूभुजा ।

योद्धुं प्रववृतेऽत्यन्तं बन्धसत्ताऽऽदिवर्मभृत् ॥१८०॥
मतिश्रुताऽवधिमनःकेवलावरणैः समम् ।
ज्ञानावरणकर्माऽथाऽचलत् कर्मद्विपानुगम् ॥ १८१ ॥
चक्षुरचक्षुरवधिकेवलदर्शनावृतिः ।
आद्या निद्रा निद्रानिद्रा प्रचला च तृतीयका ॥१८२॥
प्रचलाप्रचला स्त्यानर्धिरेवं नवभिस्ततः ।
दर्शनावरणं कर्म पार्ष्णिभागेऽभवत्तराम् ॥ १८३ ॥
सातासातभिदाभ्यां तु वेदनीयं तदग्रतः ।
तिर्यग्नारकनृस्वर्गिभेदादायुश्चतुर्विधम् ॥ १८४ ॥
गतिजातितनूपाङ्गबन्धनादिविशेषतः ।
त्र्युत्तरशतेन नाम संनह्य प्रगुणं स्थितम् ॥ १८५ ॥
उच्चैर्नीचैर्द्विधा भिन्नं गोत्रं तस्य पुरस्सरम् ।
अन्तरायो दानलाभवीर्यभोगोपभोगयुक् ॥ १८६ ॥
कषायैर्नोकषायैश्च योधैरिव महाबलैः ।
रणकामी भवस्वामी रणक्षेत्रममण्डयत् ॥ १८७ ॥
ततो व्रतमहीपालः सत्क्रियाकवचोत्तरः ।
अवर्षद् धर्मचापेन देशनानिर्मितैः खगैः ॥ १८८ ॥
पात्रस्यानुपघातेनाऽनिह्नवेन गुरोरपि ।
जिगाय ज्ञानावरणदर्शनावरणे नृपः ॥ १८९ ॥
जिनेन्द्रसिद्धचैत्यौघसंघस्य द्वेषवर्जनैः ।
अनन्तदुःखसंभारं सोऽजयद् दृष्टिमोहनम् ॥१९०॥
तीव्रक्रोधपरीहारैर्भवभ्रमणवारणैः ।
चारित्रमोहं चारित्रभूपालो जितवांस्तदा ॥ १९१ ॥
महारम्भपरित्यागैस्तीव्ररागविवर्जनैः ।
व्रतेशो नरकायुष्कं समूलमुदपाटयत् ॥ १९२ ॥
सन्मार्गदेशकत्वेन तिर्यगायुस्ततः परम् ।
विजयेन कषायाणां मनुष्यायुरथाऽजयत् ॥ १९३ ॥

तपोभिर्निर्मलैः कामं निर्जराभिः पदे पदे ।
देवायुष्कं लीलयैव जितवान् संयमाधिपः ॥ १९४ ॥
गारवाणां परित्यागाद् नीचैर्गोत्रमधिक्षिपत् ।
उच्चैर्गोत्रं तु चारित्रव्रतायुःपरिपूरणैः ॥ १९५ ॥
अन्तरायं पराजिग्ये दानलाभाऽनिवारणैः ।
इत्थं कर्ममहीपालो मूलादुन्मूलितस्तदा ॥ १९६ ॥
जितकाशी ततः श्रीमच्चारित्रक्षितिनायकः ।
निर्वाणनगरीं प्राप भासुरां शाश्वतैः सुखैः ॥ १९७ ॥
तदाऽऽदेशेन भव्यानां प्रतिबोधपरायणः ।
बलभद्रमहीपाल ! बंभ्रमीमि यथाविधि ॥ १९८ ॥
तत्त्वार्थरसिकायेनां देशनां कर्मनाशिनीम् ।
श्रुत्वा संसारभीतः सन् उवाच बलभद्रराट् ॥ १९९ ॥
तावदर्कभवस्तापो यावच्छत्रं न तन्यते ।
तावद्भवस्य भीर्यावद् न श्रुता धर्मदेशना ॥ २०० ॥
प्रभो ! देशविरत्याख्ये यथा पुरि वसाम्यहम् ।
तथा कुरु गुरूपास्तेः सर्वमल्पमिदं मम ॥ २०१ ॥
क्रमात्तत्रोषितेनेशश्चारित्रो द्रक्ष्यते मया ।
तस्मादभीष्टसिद्धिर्मे भवितैव महामते ! ॥ २०२ ॥
ततो देशविरत्याख्यगुणान् देहि महामुने ! ।
ततोऽप्युवाच निर्ग्रन्थः क्षमादिपुरुषोपमः ॥ २०३ ॥
सम्यक्त्वपूर्वकं पञ्चाऽणुव्रतानि गुणास्त्रयः ।
शिक्षाव्रतानि चत्वारि व्रतान्येतानि गेहिनाम् ॥२०४॥
श्रुत्वेदं स सम्यक्त्वेन पूर्वकं गृहमेधिनाम् ।
व्रतानि द्वादशाऽगृह्णाद् महाबलनिदेशतः ॥ २०५ ॥
तद्वदन्येऽपि भावेन जगृहुर्द्वादशव्रतीम् ।
सम्यक्श्रद्धानसंशुद्धा यथा राजा तथा प्रजा ॥२०६॥
प्रतिज्ञेयमभूत् तेषां सम्रानामपि धीमताम् ।

अन्यैरपि हि तत्कार्यं यद्येकः कुरुते तपः ॥२०७॥
ते सर्वेऽथ चतुर्थादि कर्मग्रन्थविभेदकृत् ।
चतुर्थपुरुषार्थस्य कारणं तेपिरे तपः ॥ २०८ ॥
अद्य दुष्यति मे मूर्धा दुष्यत्यद्य ममोदरम् ।
वर्ततेऽद्याऽरुचिः प्राज्यरसवीर्यविपाकतः ॥ २०९ ॥
अद्याहारस्य नामापि सर्वथा न सुखायते ।
अथोद्गारैर्मुखं वाऽपि कटुकैः कटुकैरिव ॥ २१० ॥
व्यपदिश्येति राजर्षिः स्वस्याऽधिकफलेच्छया ।
पारणाहेऽपि नाऽभुङ्क्त मायया तान् ववञ्च सः॥२११॥
भूयसा तपसा शश्वद् मायामिश्रेण सर्वतः ।
स्त्रीवेदकर्म सोऽबध्नाद् महाबलमहामुनिः ॥ २१२ ॥
अर्हद्भक्त्यादिभिः स्थानैर्विंशत्या नृपसंयमी ।
तीर्थकृन्नामकर्मोच्चैर्धीमानर्जितवानिति ॥ २१३ ॥
अर्हतां प्रतिमाऽऽर्चाभिरर्हतां स्तवनादिभिः ।
एकमर्जितवान् स्थानमवर्णादिनिवारणैः ॥ २१४ ॥
सिद्धिस्थानेषु सिद्धानामुत्सवैः प्रतिजागरैः ।
एकत्रिंशत्सिद्धगुणकीर्तनैश्च द्वितीयकम् ॥ २१५ ॥
प्रवचनोन्नतेः सम्यग् ग्लानबालादिसाधुषु ।
अनुग्रहमनोज्ञायाः स्थानमेतत् तृतीयकम् ॥ २१६ ॥
गुरूणामञ्जलेर्वन्धाद्वस्त्राहारादिदानतः ।
असमाधिनिषेधेन स्थानमेतत् तुरीयकम् ॥ २१७ ॥
स्थविरा द्विविधा प्रोक्ता वयसा सुगुणैरपि ।
तेषां भक्तिविधानेन पञ्चमं स्थानकं विदुः ॥२१८॥
बहुश्रुतानां ग्रन्थाऽर्थवेदिनां तत्त्वशालिनाम् ।
प्रासुकाऽन्नादिदानेन षष्ठं स्थानमुदीरितम् ॥ २१९ ॥
तपस्विनां सदोत्कृष्टतपःकर्मस्थिरात्मनाम् ।
विश्रामणादिवात्सल्यात् सप्तमं स्थानमिष्यते ॥२२०॥

ज्ञानोपयोगसातत्यं द्वादशाङ्गाऽऽगमस्य च ।
सूत्रार्थोभयभेदेन स्थानं ननु तदष्टमम् ॥ २२१ ॥
शङ्काविहीनं स्थैर्यादिसहितं दर्शनं स्मृतम् ।
क्षमादिलक्षणं यत्तु स्थानकं नवमं मतम् ॥ २२२ ॥
विनयो यश्चतुर्भेदो ज्ञानाद् दर्शनतोऽपि च ।
चारित्रादुपचाराच्च स्थानं तद् दशमं मतम् ॥ २२३ ॥
आवश्यकं भवेत् स्थानमेकादशमिदं पुनः ।
इच्छादिदशधा या सा सामाचारी जिनोदिता॥२२४॥
शीलव्रतं विशुद्धं यद् नवगुप्तिनियन्त्रितम् ।
तत्पाल्यं निरतीचारं स्थानं तद् द्वादशं भवेत् ॥२२५॥
त्रयोदशमिदं स्थानं क्षणे क्षणे लवे लवे ।
शुभध्यानस्य करणं प्रमादपरिवर्जनात् ॥ २२६ ॥
तपो विधीयते शक्त्या बाह्याभ्यन्तरभेदतः ।
असमाधिपरित्यागात् स्थानमुक्तं चतुर्दशम् ॥२२७॥
त्यागोऽतिथिसंविभागः शुद्धान्नोदकदानतः ।
तपस्विनां स्वयं शक्त्या स्थानं पञ्चदशं तु तत् ॥२२८॥
वैयावृत्त्यं तु गच्छस्य बालादिदशभेदतः ।
भक्तविश्रामणाद्यैः स्यात् स्थानं षोडशकं किल ॥२२९॥
समाधिः सर्वलोकस्य पीडादिकनिवारणात् ।
मनःसमाधिजननं स्थानं सप्तदशं भवेत् ॥ २३० ॥
अपूर्वज्ञानग्रहणात् सूत्रार्थोभयभेदतः ।
अष्टादशमिदं स्थानं सर्वज्ञैः परिभाषितम् ॥ २३१ ॥
श्रुतभक्तिः पुस्तकानां लेखनादिषु कर्मसु ।
व्याख्याव्याख्यापनैरेकोनविंशं स्थानकं भवेत् ॥२३२॥
प्रभावनाप्रवचने विद्यावादनिमित्ततः ।
शासनस्योन्नतेर्या स्यात् स्थानं विंशतिसंज्ञकम्॥२३३॥

१ 'भेदिन' इत्यपि ।

एकैकं तीर्थकृन्नामकर्मबन्धस्य कारणम् ।
सर्वैराराधितैरेभिस्तद् बबन्ध स संयमी ॥ २३४ ॥
पूर्वलक्षचतुरशीत्यायुष्को नृपसंयमी ।
पर्यन्तमात्मनो ज्ञात्वा व्यधादाराधनामिति ॥२३५॥
अकालविनयाद्यैर्यो ज्ञानाचारेऽष्टरूपिणि ।
अतीचारः कृतस्तत्र स्याद् मिथ्या दुष्कृतं मम ॥२३६॥
अष्टधादर्शनाऽऽचारे भेदैर्निःशङ्कितादिभिः ।
योऽतीचारः कृतस्तत्र भूयाद् मे दुष्कृतं खलु ॥२३७॥
समितिभिः पञ्चभिश्च गुप्तिभिस्तिसृभिर्वृतम् ।
पालितं यद् न चारित्रं तत्र मे दुष्कृतं तथा ॥२३८॥
तपसि द्वादशभेदे बाह्याभ्यन्तरभेदतः ।
योऽतीचारः कृतस्तत्र मिथ्या मे दुष्कृतं भवेत् ॥२३९॥
निगूहितं बलं यच्च धर्मानुष्ठानकर्मसु ।
तमहं भावतो वीर्याचारं निन्दामि सर्वतः ॥ २४० ॥
त्रसानां स्थावराणां च या हिंसा प्राणिनां कृता ।
क्रोधादिभिः कषायैश्च यदलीकं मयोदितम् ॥ २४१ ॥
यत् क्वापि भूरि वाऽल्पं च परद्रविणमाहृतम् ।
तैरश्चं दिव्यमानुष्ये यन्मैथुनमकारि च ॥२४२॥
लोभोद्रेकाद् मयाऽकारि बहुभेदपरिग्रहः ।
प्रत्यक्षं सर्वसिद्धानां सर्वं निन्दामि तत् त्रिधा ॥२४३॥
( युग्मम् )
प्राणिघातो मृषावादोऽदत्तादानं च मैथुनम् ।
परिग्रहस्तथा कोपो मानो माया च लोभकः ॥२४४॥
रागो द्वेषो रत्यरत्याभ्याख्यानं कलहस्तथा ।
पैशुन्यं परिवादश्च माया सूनृतमेव च ॥ १४५ ॥
मिथ्यादर्शनशल्यं च भवसन्तातिकारणम् ।
अमून्यष्टादशाऽवद्यस्थानानि व्युत्सृजाम्यहम् ॥२४६॥

एकेन्द्रियादिका जीवा ये केचन भवाम्बुधौ ।
भ्रमता पीडितास्तेषु तान् क्षमयामि शुद्धहृत् ॥२४७॥
यच्चक्रे पापशास्त्रादि तद् निन्दामि समाहितः ।
शीलं यत् पालितं शुद्धं तदभिष्टौमि तत्त्वतः ॥२४८॥
ग्लानानां यत्समाचीर्णं वैयावृत्यादिकं मया ।
षड्विधावश्यकं शुद्धं यच्चक्रे तत् स्तवीम्यहम् ॥२४९॥
शरणं मम तीर्थेशाः सिद्धाश्च शरणं मम ।
साधवः शरणं सर्वे धर्मः शरणमार्हतः ॥ २५० ॥
उपधिं देहमाहारमुच्छ्वासेनान्तिमेन च ।
त्रिविधं व्युत्सृजाम्युच्चैर्निर्ममत्वविभूषितः ॥ २५१ ॥
ये जानन्ति जिनाः सम्यगपराधान् मया कृतान् ।
तान् भूरिभावतः सर्वान् गर्हेऽहं सिद्धसाक्षिकम्॥२५२॥
एष जीवः कियत् पापं छद्मस्थः स्मरति स्वयम् ।
यदहं न स्मराम्यत्र मिथ्या दुष्कृतमस्तु तत् ॥२५३॥
वर्तमानजिनेन्द्राणां सिद्धानां च पुरस्सरम् ।
प्राक् कृतं दुष्कृतं सर्वं निन्दामि व्युत्सृजामि च॥२५४॥
शुभध्यानपरो मृत्वा नमस्कारपरायणः ।
भासुरे वैजयन्त्याख्ये विमाने जातवान् सुरः ॥२५५॥
अन्येऽपि मुनयः कृत्वाराधनां पावनाशयाः ।
तस्मिन्नेव विमानेऽगुः पूर्वं सङ्केतिता इव ॥ २५६ ॥

षडपि मुनय एते भावनापावनान्तः-
करणकमलभाजो ज्ञातसिद्धान्ततत्त्वाः ।
सुगुरुचरणसेवालब्धकीर्तिप्रचाराः
सुरसदनमगच्छन् वैजयन्ताभिधानम् ॥२५७॥

इत्याचार्यश्रीविनयचन्द्रसूरिविरचिते श्रीमल्लिस्वामिचरिते महाकाव्ये विनयाङ्केऽन्तरङ्गदेशनागर्भितः प्रथम-द्वितीयभवव्यावर्णनो नाम तृतीयः सर्गः ॥

अर्हम्

# अथ चतुर्थः सर्गः ।

जिनानामिव नाभेयः सरसामिव मानसम् ।
तरूणामिव कल्पद्रुर्भरतश्चक्रिणामिव ॥ १ ॥
देवानामिव सुत्रामा ग्रहाणामिव भास्करः ।
द्वीपानामादिमो द्वीपो जम्बूद्वीपोऽस्ति विश्रुतः ॥ २ ॥
( युग्मम् )
तत्राऽस्ति भरतक्षेत्रं क्षेत्रवत् प्राज्यविस्तरम् ।
बहुधान्यायसामर्थ्यं यतः प्रसरति क्षितौ ॥ ३ ॥
विदेहविषयस्तत्र ग्रामाकरपुराकुलः ।
नोपमानं नोपमेयमन्येषां दधते श्रिया ॥ ॥ ४ ॥
निधानानीव पुण्यानां कुण्डानीव यशोऽर्णसाम् ।
प्रतिग्रामं प्रतिपुरं यत्र चैत्यानि रेजिरे ॥ ५ ॥
यत्र ग्रामाः पुरायन्ते स्वर्गायन्ते पुराण्यपि ।
उपमानविहीनानि नगराणि गुरूणि तु ॥ ६ ॥
तत्राऽस्ति मिथिलानाम नगरी श्रीगरीयसी ।
श्वस्तनीवचनानीव गुणिन्यो यत्र योषितः ॥ ७ ॥
यच्चैत्यधूपवेलोत्थधूमवल्लीभिरम्बरे ।
अयत्नपटवासत्वं खेचरीणां वितन्यते ॥ ८ ॥
दधाना जगतीं श्लाघ्यास्तु रङ्गैः शुभदर्शनैः ।
प्रासादा यत्र राजन्ते मत्तवारणभासुराः ॥ ९ ॥
यस्यां गणकृतं व्यर्थं शास्त्रेष्वेव निशम्यते ।
विद्वद्गणकृतं विष्वक् प्रमाणं जिनवाक्यवत् ॥ १० ॥

कुम्भभूर्वैरिगर्वाब्धेः कुम्भः कीर्तिसुधाम्भसः ।
तत्राभूद् भूपतिः कुम्भः कामकुम्भ इवार्थिनाम् ॥११॥
सश्रीके यस्य खड्गाब्धौ शङ्खशीतांशुपुष्करे ।
कीर्तयः प्रत्यनीकानां निपेतुर्निम्नगा इव ॥ १२ ॥
भ्रमन्त्याः शेषकैलासविधुव्याजाद् जगत्त्रये ।
यत्कीर्तेश्चण्डिकाकान्तेर्वाऽसुकः स्थानभूरभूत् ॥ १३ ॥
यत्खड्गः समितौ स्वर्गिमुक्तामुभयतः स्रजम् ।
समासाद्य दधौ कक्षान्वितदन्तावलश्रियम् ॥ १४ ॥
वक्त्रप्रभापराभूतपार्वणेन्दुः प्रभावती ।
सतीमतल्लिका तस्य जज्ञे देवी प्रभावती ॥ १५ ॥
तस्याः शीलमनश्लीलं लोकंप्रीणा गुणा अपि ।
रूपं सुरूपमुर्वश्याः वाचोऽपि च सुधामुचः ॥ १६ ॥
सुविस्तीर्णनितम्बश्रीर्या चचार शनैः शनैः ।
मत्पतेर्धृतभूपीठभारो मा भूद् महानिति ॥ १७ ॥
बुभुजे कुम्भभूपालो भोगसौख्यं तया समम् ।
लक्ष्म्येव लक्ष्मीरमणः शच्येव च शचीपतिः ॥ १८ ॥
इतो महाबलस्याथ जीवः पूर्णनिजस्थितिः ।
प्रच्युत्याऽच्युतसत्कर्मा वैजयन्तविमानतः ॥ १९ ॥
अश्वयुक्संस्थिते चन्द्रे क्रूरग्रहविवर्जिते ।
फाल्गुनश्वेतचतुर्थ्यां दिवसे विजयाभिधे ॥ २० ॥
श्रीमत्कुम्भनृपागारे देव्याः कुक्षाववातरत् ।
कन्दरायां सुवर्णाद्रेः कल्पोपपदशाखिवत् ॥ २१ ॥
( त्रिभिर्विशेषकम् )

तदावतारयामिन्यां सुखसुप्ता महासती ।
वीक्षाञ्चक्रे क्रमादेतान् महास्वप्नान् प्रभावती ॥ २२॥
गोक्षीरधारागौराङ्गः ककुद्मान् मदमेदुरः ।
उन्नदन् मधुरध्वानमानन्दं मोद्गिरन्निव ॥ २३ ॥

चतुर्भिर्दशनैः शुभ्रैरुपायैरिव भूपतिः ।
करी मदरुचिः प्रेङ्खद्रोलम्बरवडम्बरी ॥ २४ ॥
रज्यद्भिरिव काश्मीरैः राजितः स्कन्धकेशरैः ।
केशरी सौम्यकामास्यः शरलीकृतबालधिः ॥ २५ ॥
करीश्वरकरक्रोडस्वर्णकुम्भजलोर्मिभिः ।
संसिच्यमानपुण्यद्रुरिव लक्ष्मीः पुरःस्थिता ॥ २६ ॥
कल्पद्रुपारिजातादिप्रसूनस्तोमगुम्फितम् ।
दाम दामाऽच्छिन्नमिव चञ्चलायाः सदा श्रियाः ॥ २७ ॥
तन्वन् कुवलयोल्लासं दृक्चकोरमुदं दिशन् ।
राजमानः करै राजा पुण्यपादपदोहदः ॥ २८ ॥
भाभिरुद्द्योतिताशेषदिक्चक्रश्चक्रबान्धवः ।
पूर्वाद्रिमौलिमाणिक्यपद्मिनीवनवल्लभः ॥ २९ ॥
सुवर्णकिङ्किणीक्काणैर्जगतोऽशेषसंपदः ।
व्याहरन्निव सद्वंशभ्राजिष्णुश्चपलो ध्वजः ॥ ३० ॥
नीलाम्बरोऽम्बरेणेव रोचिष्णुः प्रबलैर्दलैः ।
कामकुम्भः श्रियो देव्याश्चित्रं लीलाविलासभूः ॥ ३१ ॥
आकण्ठं पूर्णमम्भोभिः सुधाकुण्डमिवापरम् ।
तापोपतापविध्वंसि पद्मरम्यं सरोवरम् ॥ ३२ ॥
मर्यादोदयरोचिष्णुर्भ्राजिष्णुर्वाहिनीशतैः ।
सार्वभौमभ्रमं चिन्वन् गम्भीरः सरितांपतिः ॥ ३३ ॥
गर्भजीवस्फुरत्प्राज्यहर्षव्यतिकरादिव ।
विमानमनुगं स्फूर्जत्किङ्किणीक्काणभासुरम् ॥ ३४ ॥
किं रोहणं करे कृत्वा किंवा रत्नाकरं पुनः ।
रत्नोच्चयः पुरः पुण्यसम्पदा प्राभृतीकृतः ॥ ३५ ॥
दधानो वैद्रुमीं भ्रान्तिं ज्वालामालाकरालितः ।
उद्यद्दिनेशसदृशो निर्धूमश्च विभावसुः ॥ ३६ ॥

इत्येतान् हर्षकल्पद्रोः सुमेरुगिरिकन्दरान् ।
प्रभावती महादेवी दृष्ट्वा स्वप्नान् व्यबुध्यत ॥ ३७ ॥
( पञ्चदशभिः कुलकम् )

इतस्तत्र समागत्य सर्वेऽपि त्रिदशेश्वराः ।
चलत्कुण्डलमाणिक्यरचितेन्द्रधनुर्द्युतः ॥ ३८ ॥
किरीटस्पृष्टभूपीठा नेत्रैर्नीलोत्पलैरिव ।
प्रभावती समभ्यर्च्य पेठुस्तवनमीदृशम् ॥ ३९ ॥
प्रभावति ! नमस्तुभ्यं प्रभावातिशयान्विते ! ।
सद्वृत्ताऽदोषतीर्थेशरत्नरोहणचूलिके ! ॥ ४० ॥
प्रभावमहिमालास्यमौषधं सुदृशां परम् ।
अनूपेऽम्बुनिपानं च मरौ नद्यवतारणम् ॥ ४१ ॥
दरिद्राणां धनमिदं प्रपा भवपथे नृणाम् ।
यत्त्वया त्रिजगन्नाथो ध्रियते कुक्षिकन्दरे ॥४२॥ (युग्मम्)
प्रभावतीमिति स्तुत्वा द्वीपे नन्दीश्वराभिधे ।
कृत्वा महोत्सवं स्थानं स्वं स्वमीयुः सुरोत्तमाः ॥४३॥
स्वप्नान्तादपि जाग्रत्या प्रभावत्या महीपतेः ।
कथयामासिरे प्रातर्यथादृष्टममून्यथ ॥ ४४ ॥
ऋजुना मनसा स्वप्नान् विचार्य क्षोणिनायकः ।
आचख्याविति ते देव्यपत्यरत्नं भविष्यति ॥ ४५ ॥
विशेषतस्त्वमीषां तु फलं ज्ञातुं धरेश्वरः ।
आजूहवत् प्रतीहारात् स्वप्नशास्त्रविशारदान् ॥ ४६ ॥
पार्वणेन्दुवदाऽऽनन्दसम्पादनकृतोद्यमाः ।
वंशगोरोचनापुण्ड्रा आजग्मुः स्वप्नपाठकाः ॥४७॥
आर्यवेदोद्भवान् मन्त्रानुच्चार्योद्दामया गिरा ।
उपाविक्षन्नासनेषु मराला नलिनेष्विव ॥ ४८ ॥
आसयामास भूपालो जायां जवनिकान्तरे ।
अथैषा न्यगदत् स्वप्नानाऽऽप्ततत्त्वयुजा गिरा ॥४९॥

स्वप्नान् द्वासप्ततिं राजन्! प्रशस्तान् कोविदा विदुः।
तन्मध्यात् त्रिंशतं तेषु महास्वप्नांश्चतुर्दश ॥ ५० ॥
अर्हतां चक्रिणां माता चतुर्दशैव पश्यति।
हरेर्माता तथा सप्त चतुरः सीरिणोऽपि च ॥ ५१ ॥
अमुत्र भरतक्षेत्रे जिना अष्टादशाऽभवन्।
चक्रिणोऽष्टौ भरताद्याः षट्खण्डभरतेश्वराः ॥ ५२ ॥
एकोनविंशतीर्थेशजनिरुद्राव्यतेऽधुना।
अथवा चक्रिणो राजन्! नवमस्य हि साम्प्रतम् ॥५३॥
परितुष्टोऽथ भूनाथस्तद्वचःश्रवणादसौ।
ददौ ग्रामाकराद्युच्चैर्वासोऽलङ्करणादि च ॥ ५४ ॥
वस्त्रालङ्करणैरेते कल्पद्रुमदलैरिव।
राजमाना ययुर्गेहं श्रिया श्रीदविडम्बिकाः ॥ ५५ ॥
देवानुभावसम्पूर्णमनोरथतया भृशम्।
मुदितायाः सुखेनैव गर्भो देव्या व्यवर्धत ॥ ५६ ॥
सार्धाष्टमदिने मासनवके गतवत्यथ।
मार्गविशुद्धैकादश्यामश्विन्यां च निशाकरे ॥ ५७ ॥
ग्रहेषूचस्थितेषूच्चैस्तज्जन्मौको दिदृक्षया।
एकोनविंशमर्हन्तं नीलाभं कुम्भलाञ्छनम् ॥ ५८ ॥
प्राग्जन्ममाययोपात्तस्त्रीकर्मत्वेन कन्यकाम्।
प्रभावती प्रसूते स्म गङ्गेव स्वर्णपद्मिनीम् ॥ ५९ ॥
(त्रिभिर्विशेषकम्)

अनुकूला ववुर्वातास्तज्जन्मसुखिता इव।
सुप्रसन्ना दिशोऽभूवन् कृतकृत्या इव प्रजाः ॥ ६० ॥
अरिष्टानि क्षयं जग्मुः शुभशस्यमभूद् जगत्।
नारकाणामपि सुखमाकस्मिकमभूत् क्षणम् ॥ ६१ ॥
दिक्कुमार्यो विदित्वाऽथ तज्जन्मासनकम्पतः।
अधोलोकात् समाजग्मुरष्टौ देव्यः ससंभ्रमम् ॥६२॥

ताश्चैताः—

भोगङ्करा भोगवती सुभोगा भोगमालिनी ।
सुवत्सा वत्समित्रा च पुष्पमाला त्वनिन्दिता ॥ ६३ ॥
एकोनविंशतीर्थेशमम्बां च जगतां पतेः ।
अनुप्रदक्षिणीकृत्य नत्वा भक्त्येत्थमूचिरे ॥ ६४ ॥
समुद्द्योतितभुवने ! जगन्नायकजन्मना ।
जगद्वन्द्यगुणाधारे ! जगन्मातर्नमोऽस्तु ते ॥ ६५ ॥
अधोलोकनिवासिन्यो वयमष्टौ जगन्नुते ! ।
तीर्थकृज्जन्ममहिमां कर्तुकामा इहागताः ॥ ६६ ॥
अस्मत्तस्तद् न भेतव्यमुक्त्वा पूर्वोत्तरस्थिताः ।
प्राङ्मुखं सूतिकौकस्ताश्चक्रुः स्तम्भसहस्रयुक् ॥ ६७ ॥
अभितः सूतिकाधाम ततः संवर्तवायुना ।
कण्टकतृणकाष्ठाद्यमायोजनमपाहरन् ॥ ६८ ॥
अथ संहृत्य पवनं प्रणम्य जिननायकम् ।
आसन्नाऽऽसनमासीना गायन्त्योऽस्युर्यथाविधि ॥६९॥
सुवर्णाद्रिकृतावासास्तद्वदासनकम्पतः ।
ऊर्ध्वलोकात् समाजग्मुरष्टौ देव्यस्तथाऽपराः ॥ ७० ॥
मेघङ्करा मेघवती सुमेघा मेघमालिनी ।
तोयधारा विचित्रा च वारिषेणा बलाहिका ॥ ७१ ॥
विकृत्य जलदं कृत्वा प्रशान्तरजसं महीम् ।
विधाय पुष्पवृष्टिं च ता गायन्त्योऽवतस्थिरे ॥ ७२ ॥
पौरस्त्यरुचकादष्टौ पूर्वस्या दिश आगताः ।
हस्तस्थदर्पणा देव्यो जगुस्तत्रार्हतो गुणान् ॥ ७३ ॥
ताश्च नन्दोत्तरानन्दे सुनन्दानन्दिवर्द्धने ।
विजया वैजयन्ती च जयन्ती चाऽपराजिता ॥ ७४ ॥
अपाच्यरुचकाद्रिस्था दक्षिणस्या दिशोऽपराः ।

१ 'त्रिजगत्पते' इत्यपि ।

अष्टावेत्य स्वादिग्भागेऽगायन् भृङ्गारपाणयः ॥ ७५ ॥

ताश्चेमाः–

समाहारा सुप्रदत्ता सुप्रबुद्धा यशोधरा ।
लक्ष्मीवती शेषवती चित्रगुप्ता वसुन्धरा ॥ ७६ ॥
ततस्तस्य गिरेरेव प्रहृष्टा वारुणीदिशः ।
संस्थानं तत्र देव्योऽष्टौ चक्रुर्व्यजनपाणयः ॥ ७७ ॥

ताश्चेमाः–

इलादेवी सुरादेवी पृथिवी पद्मवत्यथ ।
एकनासाऽनवमिका भद्रशोकेति नामतः ॥ ७८ ॥
एवमुत्तरदिग्भागादपि रुचकवर्तिनः ।
समेत्याष्टौ स्थितिं चक्रुस्तत्र चामरपाणयः ॥ ७९ ॥

ताश्चेमाः–

अलम्बुशा मिश्रकेशी पुण्डरीका च वारुणी ।
हासा सर्वप्रभा चैव श्रीर्ह्रीरित्यभिधानतः ॥ ८० ॥
चतस्रो विदिग्रुचकात् सदीपा दिक्कुमारिकाः ।
चित्रा चित्रकनका सुतारा सौत्रामणी तथा ॥ ८१ ॥
प्रणिपत्य जगन्नाथं जगन्नाथस्य मातरम् ।
ईशान्यादिविदिक्संस्था बभूवुर्दीपपाणयः ॥ ८२ ॥
देव्योऽन्या मध्यरुचकात् चतस्रः समुपस्थिताः ।
रूपा रूपाश्रिका चाऽपि सुरूपा रूपकावती ॥ ८३ ॥
ताश्चतुरङ्गुलीवर्जं नालं छित्त्वा भुवोऽन्तरे ।
क्षिप्त्वा रत्नमयं रत्नदूर्वापीठं विचक्रिरे ॥ ८४ ॥
विहाय पश्चिमां जन्मगृहाद् दिक्षु तिसृष्वपि ।
रम्भागृहाणि चत्वारि देव्यस्ताश्च विचक्रिरे ॥ ८५ ॥
तेषां मध्ये चतुःशालं विशालं निजचित्तवत् ।
प्रत्येकं रचयामासुः सिंहासनविकस्वरम् ॥ ८६ ॥
दाक्षिणात्ये चतुःशाले नीत्वाऽमुं विनिवेश्य च ।

सिंहासने सुतैलेनाऽभ्यानञ्जुर्मृदु मर्दनम् ॥ ८७ ॥
जनन्या सममभ्यर्च्य शीघ्रमुद्वर्त्य च प्रभुम् ।
निन्यिरे निभृतं देव्यः पौरस्त्ये कदलीगृहे ॥ ८८ ॥
तत्र गन्धाम्बुभिः पुष्पाम्बुभिः शुद्धाम्बुभिस्तथा ।
द्वावपि स्नपयित्वाथ भूषयन्ति विभूषणैः ॥ ८९ ॥
नीत्वोत्तरस्या रम्भायाः सदने हरिचन्दनैः ।
प्रज्वाल्याऽरणिना वह्निं ताश्च भूतिं विचक्रिरे ॥९०॥
रक्षाबन्धं व्यधुस्ताश्च जननीस्वामिनोः करे ।
रक्षा दुरितभिद्रेखां लभते सर्ववस्तुषु ॥ ९१ ॥
पर्वतायुर्भवेत्युच्चैरुक्त्वा कर्णान्तिके प्रभोः ।
अवादयंस्ततो रत्नपाषाणौ कांस्यतालवत् ॥ ९२ ॥
सूतिकाधाम ता निन्युर्जननी जिनमप्यथ ।
षट्पञ्चाशद्दिक्कुमार्यस्ता गायन्त्योऽवतस्थिरे ॥ ९३ ॥

इतश्च-

सौधर्मे प्रथमे कल्पे कल्पेशोऽनल्पवैभवः ।
अनेकदेवदेवीनां कोटीभिः परिवारितः ॥ ९४ ॥
गीयमानगुणग्रामो गन्धर्वैः कोमलस्वनैः ।
स्तूयमानयशाश्चारु चारणैर्विरुदालिभिः ॥ ९५ ॥
दोधूयमानचमरो देवनारीभिरादरात् ।
यावदास्ते हरिस्तावदासनं कम्पमासदत् ॥ ९६ ॥
( त्रिभिर्विशेषकम् )

तत्प्रकम्पादसौ रुष्टस्ताम्रीकुर्वन् दृशोर्युगम् ।
अन्तर्ज्वलत्कोपवह्निज्वालाः प्रकटयन्निव ॥ ९७ ॥
वक्रीकुर्वन् भ्रुवोर्युग्मं कोदण्डमिव भीषणम् ।
ज्वलज्ज्वालाकुलं पाणौ वज्रं वज्रधरोऽधरत् ॥ ९८ ॥
तत्कोपाटोपमुद्वीक्ष्य नम्रमौलिः कृताञ्जलिः ।
प्राचीनबर्हिषं प्रोचे नैगमेषी चमूपतिः ॥ ९९ ॥

कथङ्कारं प्रभो ! कोपो मयि सत्यपि तन्यते ।
शृणु त्वाऽऽसनकम्पस्य कारणं श्रोत्रपारणम् ॥१००॥
द्वीपाद्ये जम्बूद्वीपेऽस्मिन् वर्षे दक्षिणभारते ।
मिथिलायां महापुर्यां श्रीमत्कुम्भमहीपतेः ॥ १०१ ॥
पट्टदेव्याः प्रभावत्या अद्यैव त्रिजगत्पतिः ।
एकोनविंशतीर्थेशो भगवान् समजायत ॥१०२॥(युग्मम्)
तेनासनप्रकम्पोऽयं तीर्थकृज्जन्मसूचकः ।
दिव्यसौख्यप्रमत्तानां कथं वोऽवधिरन्यथा ॥१०३॥
श्रुत्वेदं त्रिदशाधीशस्तस्मिन् दुश्चिन्तिते निजे ।
मिथ्यादुष्कृतमवदन् निन्दन्नात्मप्रमादिताम् ॥ १०४ ॥
अथोत्थायाऽऽसनादिन्द्रः सप्ताष्टौ च पदान्यऽदात् ।
संमुखं जिननाथस्य ततः स्तोतुं प्रचक्रमे ॥ १०५ ॥
सम्पूर्णस्त्वं त्रिभिर्ज्ञानैर्गर्भवासादपि प्रभो ! ।
अतोऽपि यो गुणोच्छ्रायः स भवेत् कस्य गोचरः॥१०६॥
एवं जिनस्तुतिं कृत्वा सेनान्यं हरिणाननम् ।
आदिदेशेति सुत्रामा गिरा धीरप्रशान्तया ॥ १०७ ॥
जम्बूद्वीपे मिथिलायां श्रीमत्कुम्भस्य भूपतेः ।
एकोनविंशस्तीर्थेशः प्रभावत्यामजायत ॥ १०८ ॥
कर्तुं तस्या जनिस्नात्रमाहूयन्तां दिवौकसः ।
कल्याणिकोत्सवविधेरधिकारो यतोऽस्ति नः ॥१०९॥
अवादयदसौ घण्टां परिमण्डलयोजनाम् ।
सुघोषां तन्निनादेन घोषः सर्वास्वजायत ॥ ११० ॥
द्वात्रिंशतीविमानानां घण्टालक्षेष्वथ स्वनः ।
समकालं समुत्तस्थे शब्दाद्वैतमभूत् तदा ॥ १११ ॥
संभ्रान्तान् रणनैस्तासां दृष्ट्वा तानिति सोऽब्रवदत् ।
जन्मस्नात्रे जिनेन्द्रस्य सहेन्द्रेण प्रसर्पताम् ॥ ११२ ॥
केऽपि शक्राज्ञया चेलुः केचिद् भक्त्या जिनं प्रति ।

विचित्रैर्वाहनै रूढास्त्रिदशाः शक्रसन्निधौ ॥ ११३ ॥
पालको द्युसदीशेनाऽऽभियोगिकशिरोमणिः ।
आदिष्टो विदधे वेगाद्विमानं बहुमानतः ॥ ११४ ॥
भुजैरिव ध्वजैर्नृत्यच्छत्रैर्हसदिवोज्ज्वलैः ।
वीक्ष्यमाणं यदुत्तुङ्गैर्गवाक्षैर्नयनैरिव ॥ ११५ ॥
ततः प्रदक्षिणीकृत्य प्राच्यसोपानवर्त्मना ।
द्युसन्नाथो विमानं तदारुरोह समं सुरैः॥११६॥(युग्मम्)
गन्धर्वनाट्यानीकाभ्यां कौतुकाक्षिप्तमानसः ।
अभिस्वयम्भूरमणं तेनाचालीत् पुरन्दरः ॥ ११७ ॥
हस्तिवाहन ! मा गास्त्वं पुरः सिंहभृतो मम ।
अश्वसादिन्नितो याहि महिषो मम वाहनम् ॥११८॥
सर्पगामिन्नितो याहि न मे तार्क्ष्यः सहिष्यते ।
मद्विमानं विमानाग्रैः किं घट्टसि सुधाशन !? ॥११९॥
इत्थं सौधर्मकल्पस्य देवानां परिसर्पताम् ।
कोलाहलैर्नभो व्यापि सरिद्घोषैरिवाम्बुधिः ॥१२०॥
अथाऽसंख्यातद्वीपाब्धीनतिक्रम्य क्षणादपि ।
संक्षिपन् संक्षिपन्नुच्चैस्तद्ग्रन्थवत् पुरन्दरः ॥ १२१ ॥
भारते दक्षिणे पुर्यां मघवा समुपागतः ।
तस्मादुत्तीर्य तीर्थेशं तदम्बां चाऽनमत्तराम् ॥१२२॥
प्रभावति ! प्रभायुक्ते ! जिनकल्पद्रुमप्रदे ! ।
नमो दत्तजगद्दीपे ! नमश्चिन्तामणिप्रदे ! ॥ १२३ ॥
इति प्रभावती स्तुत्वा दत्त्वा च स्वापिनीं हरिः ।
प्रतिरूपं प्रभोर्मुक्त्वा चलितोऽभिसुराऽचलम् ॥१२४॥
वज्रं छत्रं जिनं बिभ्रच्चामरे च पृथक् पृथक् ।
इतीन्द्रः पञ्च रूपोऽभूद् मार्गे मेरुं प्रति व्रजन् ॥१२५॥
ततो देवाङ्गनादेवकोटिलक्षसमन्वितः ।
पूरयन् गगनं तूर्यघोषैर्हर्षमयैरिव ॥ १२६ ॥

निमेषार्धेन गत्वाऽसौ सुवर्णाचलचूलिकाम् ।
अतिपाण्डुकम्बलायां शिलायां प्राङ्मुखः स्थितः॥१२७॥
एवमीशानकल्पेशः सनत्कुमारसंज्ञिकः ।
माहेन्द्रो ब्रह्मलोकेशो लान्तकस्त्रिदशाधिपः ॥ १२८ ॥
शुक्रशक्रः सहस्रार आनतः प्राणतेश्वरः ।
आरणाच्युतराजोऽपि दशेत्थं कल्पवासवाः ॥१२९॥
श्रेणिद्वयनिकायेषु दशसूभयतः क्रमात् ।
अमी विंशतिरिन्द्राः स्युर्भवनानामधीश्वराः ॥१३०॥
पुर्यां चमरचञ्चायां चमेरन्द्रो बलिस्तथा ।
धरणेन्द्रो भूतानन्दो हरिस्सहहरिस्त्वभौ ॥ १३१ ॥
वेणुदेवो वेणुदारी त्वग्निशिखाग्निमाणवौ ।
वेलम्बमभञ्जनाख्यौ सुघोषो भवनेश्वरः ॥ १३२ ॥
महाघोषो जलकान्तो जलप्रभ इति स्मृतः ।
पूर्णो विशिष्टशक्रश्च त्वमितामितवाहनौ ॥ १३३ ॥
एवं च व्यन्तरश्रेण्योर्दक्षिणोत्तरकोणयोः ।
अष्टावष्टनिकायाः स्युस्तेष्विन्द्राः षोडश क्रमात्॥१३४॥
कालशक्रो महाकालः सुरूपः प्रतिरूपकः ।
पूर्णभद्रो माणिभद्रो भीमो यक्षगणेश्वरः ॥ १३५ ॥
महाभीमः किन्नरश्च किंपुरुषस्ततः परम् ।
तथा सत्पुरुषमहापुरुषौ वासवाविमौ ॥ १३६ ॥
अतिकायमहाकायौ महोरगप्रभाविमौ ।
गीतरतिर्गीतयशा गन्धर्वाणामधीश्वराः ॥ १३७ ॥
तद्वदाप्रज्ञप्तिपञ्चप्रज्ञप्त्यादीनां तु षोडश ।
व्यन्तराष्टनिकायाणां वासवाः समुपागताः ॥१३८॥
तथाप्रज्ञप्तीनां शक्रः संनिहितः समानकः ।
धाता विधाता च हरी ऋषिश्च ऋषिपालकः ॥१३९॥
ईश्वरो महेश्वरश्च सुवत्सकविशालकौ ।

हासहासरती श्वेतमहाश्वेतौ पुरन्दरौ ॥ १४० ॥
पवकपावकपती पवकानां तु वज्रिणौ ।
एवं षोडश देवेन्द्रा आययुर्मेरुमूर्द्धनि ॥ १४१ ॥
ज्योतिष्काणामशेषाणां चन्द्रादित्यावधीश्वरौ ।
चतुःषष्टिरितीन्द्राणां मेरुमूर्द्धानमाययौ ॥ १४२ ॥
आदिदेशाऽच्युतेन्द्रोऽथाऽऽभियोगिकदिवौकसः ।
क्षीरोदादि समानेतुं जिनस्नपनहेतवे ॥ १४३ ॥
क्षीरोदादिसमुद्रेषु गङ्गादिषु नदीषु च ।
तीर्थेषु मागधाद्येषु ते गत्वा जगृहुर्जलम् ॥ १४४ ॥
तद्वन्मृत्स्नापयोजादि स्नात्वा क्षीरोदवार्द्धितः ।
गोशीर्षचन्दनादीनि ते शक्रेभ्यो डुढौकिरे ॥ १४५ ॥
सौवर्णान् राजतान् रात्नान् स्वर्णरूप्यविनिर्मितान् ।
रत्नस्वर्णमयान् दिव्यान् रजतस्वर्णरत्नजान्॥१४६॥
रूप्यरत्नमयान् भौमान् विचक्रुः कलशांश्च ते ।
अष्टोत्तरं सहस्रं स्याच्चेषां प्रत्येकमेव च॥१४७॥(युग्मम्)
अतिपाण्डुशिलापीठरत्नसिंहासने स्वयम् ।
सौधर्मेन्द्रो निषद्याऽङ्के दधौ त्रिजगतां पतिम्॥१४८॥
अच्युतेन्द्रस्ततो भक्त्या कर्पूरागरुधूपितम् ।
मुमोच विश्वनाथस्य पुरतः कुसुमाञ्जलिम् ॥ १४९ ॥
ताड्यमानासु भेरीषु मृदङ्गेषु स्वनत्स्वथ ।
मुहुरास्फाल्यमानासु कांस्यतालासु निर्दयम्॥ १५०॥
स्मयमानैरिव न्यस्तविस्मेरकुसुमोत्करैः ।
अधीयानैरिव स्नात्रश्लोकान् गुञ्जदलिच्छलात्॥१५१॥
अच्युतेन्द्रेण तैः कुम्भैर्योजनाऽऽस्यैर्जगद्गुरोः ।
स्नात्रं चक्रे महानन्दात् सुधाभुग्भिः समं निजैः॥१५२॥
( त्रिभिर्विशेषकम् )

एवं द्वाषष्टिरन्येऽपि स्नात्रं चक्रुर्जगत्पतेः ।

भक्त्या महत्याऽनुज्येष्ठं सोदर्या इव हर्षतः ॥ १५३ ॥
यदैकः कुरुते स्नात्रं शक्रोऽन्ये हरयस्तदा ।
सर्वेऽर्हतः पुरः सन्ति धृतचामरपाणयः ॥ १५४ ॥
विकृत्य पञ्च रूपाणि तद्वदीशानवासवः ।
सौधर्मेन्द्राधिपस्थाने दधन्नाथमवस्थितः ॥ १५५ ॥
अथ सौधर्मनाथोऽपि चतुर्दिक्षु व्यधात् क्रमात् ।
वृषभांश्चतुरः स्फारस्फाटिकोपलनिर्मितान् ॥ १५६ ॥
तेषामुत्तुङ्गशृङ्गाग्रप्रसृता गगनाङ्गणे ।
प्रसस्रुरम्भसामष्टौ धाराश्चन्द्रकलोज्ज्वलाः ॥ १५७ ॥
एकीभूय पतन्त्यस्ताश्चन्द्रकान्तसमुज्ज्वलाः ।
निम्नगा इव पाथोधौ निपेतुः प्रभुमूर्द्धनि ॥ १५८ ॥
स्नपयित्वेति तीर्थेशं भाविनं त्रिदशाधिपः ।
रत्नदर्पणवद्वेगाद् ममार्जाङ्गं विभोरथ ॥ १५९ ॥
ततो रत्नमये पट्टे स लिलेखाऽष्टमङ्गलीम् ।
निजपुण्यैरिवाखण्डैस्तण्डुलै रूप्यनिर्मितैः ॥ १६० ॥
ततो विलेपयामास वासवोऽङ्गं जगत्पतेः ।
भूषणानि च प्रत्यङ्गं वासवः पर्यदीधपत् ॥ १६१ ॥
विनिद्रपारिजाताद्यैः कुसुमैः परमेश्वरम् ।
मुखकोशमनोहारि पूजयामास वृत्रहा ॥ १६२ ॥
उत्तार्य लवणं त्रिश्च सर्वदोषविभेदकृत् ।
आरात्रिकमुपादत्त पुरोभूय हरिर्विभोः ॥ १६३ ॥
इतश्च विस्मिताः केचिद् मञ्जु गुञ्जन्ति भृङ्गवत् ।
केचिच्च बृंहितं चक्रुः कुञ्जरा इव निर्जराः ॥१६४॥
केचित्तकारधौङ्कारं वाद्यैरिव मुखैर्व्यधुः ।
सिंहनादं मुहुः केचिद् नटा इव वितेनिरे ॥१६५॥

---

१ 'त्रिदिवाधिप' इत्यपि । २ 'दीप्राणि' इति च ।
३ 'संजगुर्जातिभङ्गवत्' अयमपि पाठ ।

केचित् कोलाहलं चक्रुर्जितद्यूतपणा इव ।
अहासयन् सुरान् केचिद् विटवद् नर्मभाषणैः ॥१६६॥
एवं जन्मोत्सवे कोऽपि हर्षो जज्ञे दिवौकसाम् ।
वागीशोऽपि गिरां गुम्फैर्यं वर्णयितुमक्षमः ॥ १६७ ॥
वामं जानुमथाऽऽकुञ्च्य शिरोन्यस्तकरो हरिः ।
परमानन्दनिर्मग्नः शक्रस्तवनमुज्जगौ ॥ १६८ ॥
नमोऽर्हते भगवते आदितीर्थकृते नमः ।
स्वयंसंबुद्धतत्त्वाय नराणामुत्तमाय च ॥ १६९ ॥
नरसिंहाय पुरुषपुण्डरीकाय ते नमः ।
नृवरगन्धकरिणे नमो लोकोत्तमाय च ॥ १७० ॥
लोकनाथाय लोकानां कृतोत्तमहिताय च ।
लोकानां तु प्रदीपाय लोकप्रद्योतकारिणे ॥ १७१ ॥
नमोऽस्त्वभयदात्रे च चक्षुर्दात्रे च सर्वदा ।
मार्गदाय शरण्याय बोधिदात्रे नमो नमः ॥ १७२ ॥
धर्मदात्रे धर्मदेष्ट्रे धर्माधिपतये नमः ।
धर्मसारथये धर्मचतुरन्तैकचक्रिणे ॥ १७३ ॥
नमः सदाऽप्रतिहतज्ञानदर्शनधारिणे ।
विगतच्छद्मने नित्यं जिनाय जापकाय च ॥ १७४ ॥
तीर्णाय तारकायोच्चैर्बुद्धाय बोधकाय च ।
मुक्ताय मोचकाय सर्वज्ञाय सर्वदर्शिने ॥ १७५ ॥
शिवाऽचलाऽरुजाऽनन्ताऽक्षयाऽव्याबाधनिर्वृतौ ।
सम्प्राप्ताय नमस्तुभ्यमिति शक्रः स्तवं व्यधात् ॥१७६॥
कृतकृत्यमिवात्मानं मन्यमानोऽर्हतो नतौ ।
रोमाञ्चितवपुः शक्र इति स्तोतुं प्रचक्रमे ॥ १७७ ॥
नमस्तुभ्यं जिनाधीश ! परमानन्ददायिने ।
उल्लसत्करुणाक्षीरपाथोधिशशलक्ष्मणे ॥ १७८ ॥
त्वया त्रिजगतां नाथ ! फलिनीदलकान्तिना ।

बद्धेन्द्रनीलमुकुट इवाऽऽभाति सुराऽचलः ॥ १७९ ॥
स्तुत्वेति मिथिलां गत्वा हृत्वा च स्वापिनीमपि ।
भूत्वा मातुर्जिनं पार्श्वे मुक्त्वा शक्रोऽभ्यधादिदम्॥१८०॥
अस्मिन् स्वामिन्यकल्याणं योऽधमश्चिन्तयिष्यति ।
तस्यार्जमञ्जरीवाऽऽशु स्फुटिष्यति शिरः स्वयम्॥१८१॥
पूरयित्वा विभोर्वेश्म रत्नस्वर्णादिभिः स च ।
यात्रां नन्दीश्वरे कृत्वा स्वं स्थानं हरयो ययुः॥१८२॥
प्रभावतीमथ ज्ञात्वा प्रसूतां सम्भ्रमान्विताः ।
स्त्रियः श्रीकुम्भभूपस्य सुतोत्पत्तिं बभाषिरे ॥१८३॥
स्वकिरीटं विना ताभ्यः स्वाङ्गिकं भूषणं ददौ ।
वृत्तिं च चक्रिरे यावद् वेणिकामपि सप्तमीम् ॥१८४॥
रत्नस्वर्णादिभिः पूर्णं गृहं वीक्ष्य नरेश्वरः ।
अज्ञासीत् तनयोत्पत्तौ देवेन्द्राणां समागमम् ॥ १८५॥
ततो मुमुचिरे राज्ञा कारागाराद् द्विषन्नृपाः ।
कारयाश्चक्रिरे पूजा जैनचैत्येषु सर्वदा ॥ १८६ ॥
समाजग्मुरुपाध्यायाः पठन्तः सुतमातृकाम् ।
उच्चावचपदैश्छात्रैर्वल्गद्भिर्मर्कटैरिव ॥ १८७ ॥
चन्द्रार्कदर्शनं भर्तुस्तृतीयेऽह्नि प्रमोदतः ।
षष्ठीजागरणं षष्ठे पितृभ्यां च व्यरच्यत ॥ १८८ ॥
गर्भस्थेऽस्मिन् प्रभौ मातुर्माल्यशयनदोहदम् ।
बभूव तन्मल्लिरिति प्रभोर्नाम प्रतिष्ठितम् ॥ १८९ ॥
अङ्गुष्ठस्थां पपौ स्वामी शक्रसंक्रामितां सुधाम् ।
उदयेऽपि क्षुधः स्तन्यं न पिबन्ति जिनेश्वराः॥१९०॥
रेजे देहः शुचिर्भर्तुरप्रक्षालितनिर्मलः ।
निरामयः सुगन्धिश्च पूर्णकर्पूरपात्रवत् ॥ १९१ ॥
पद्मकिञ्जल्कसुरभिर्बभौ श्वासो जगत्पतेः ।
गोक्षीरधारागौरे च रेजाते रुधिरामिषे ॥ १९२ ॥

विभोराहारनीहारौ चर्मचक्षुरगोचरौ ।
चत्वारोऽतिशया एते सहजोत्था गुणा इव ॥ १९३ ॥
मज्जनस्तन्यनेपथ्यक्रीडालालनकर्मसु ।
कर्मठाः पञ्च धात्र्योऽथ शक्रेण विनियोजिताः॥१९४॥
लाल्यमानः प्रभुस्ताभिर्देहोपचयमागमत् ।
क्रमेण यौवनं प्राप त्रैलोक्यश्रीदृगौषधम् ॥ १९५ ॥
पञ्चविंशतिधन्वोच्चो नीलोत्पलदलच्छविः ।
वज्रर्षभसंहननधारी कलशलाञ्छनः ॥ १९६ ॥
मल्लीसुरभिनिःश्वासो निवासः सर्वसम्पदाम् ।
पाशो रतिप्रियन्यङ्कोः श्रीमन्मल्लिरभात्तराम् ॥ १९७॥
( युग्मम् )
नमन्नृपतिशीर्षेषु कुन्दकान्तनखेन्दवः ।
विस्मेरकेतकीपत्रशोभां भेजुर्जगत्पतेः ॥ १९८ ॥
एणीजङ्घोपमं जङ्घायुग्मं भाति जगत्पतेः ।
नाभिश्च सरितां भर्तृकल्पो लवणिमाश्रयः ॥ १९९ ॥
प्रभोर्वक्त्रश्रियं प्राप्तुं मग्नमाकण्ठमम्बुजम् ।
रोलम्बरवजव्याजाद् मन्त्रजापं तनोत्यलम् ॥२००॥
प्रभोर्नेत्राब्जयोर्लक्ष्मीर्वाचि देवी सरस्वती ।
कलङ्कमिव संमार्ष्टुं स्नेहादेकत्र तिष्ठतः ॥ २०१ ॥
नव्यः श्रियः पतिः स्वामी हिरण्यकशिपुप्रदः ।
यस्य वक्षःस्थिता लक्ष्मीर्जगत्काम्या विराजते ॥२०२॥
विद्रुमैरिव किंकिल्लिपल्लवैः कोमलैरिव ।
कुरुविन्दैरिवालिप्तं प्रभोः पाणितलं बभौ ॥ २०३ ॥
अलीकत्वं प्रभोः केशे वक्रत्वं लटभभ्रुवोः ।
तुच्छत्वं मध्यदेशेऽपि नान्यत्र स्वामिनि स्थितम्॥२०४॥
अहंपूर्विकया सर्वैर्लक्षणैः पर्यलङ्कृतः ।

१ ' तुमुल ' इत्यपि ।

बभौ देहो जगद्भर्तुर्नद्योघैरिव वारिधिः ॥ २०५ ॥
को भवेद् जिनरूपस्य निपुणो वर्णनं प्रति ।
देवदेहा अपि बभुर्यत्पुरोऽङ्गारका इव ॥ २०६ ॥

अलिककलितपाणिद्वन्द्वविभ्राजमानो
भवजलधिनिमज्जज्जन्तुपोतोपमस्य ।
जिनपरिवृढमल्लेः पुण्यवल्लेः स्वरूपं
विनयविनतमूर्तिर्वर्णयामास रूपम् ॥२०७॥

इत्याचार्यश्रीविनयचन्द्रसूरिविरचिते श्रीमल्लिस्वामिचरिते
महाकाव्ये विनयाङ्के च्यवनजन्मकल्याणिक-
द्वितयव्यावर्णनो नाम चतुर्थः सर्गः ॥

अर्हम्

## अथ पञ्चमः सर्गः ।

इतश्च वैजयन्ताख्यविमानात् स परिच्युतः ।
जीवोऽचलस्य साकेते प्रतिबुद्धिर्नृपोऽजनि ॥ १ ॥
कामो वयसि पीयूषं यो वचसि महीयसि ।
गीष्पतिः सदसि त्वष्टा महसि क्षात्रसंम्भवे ॥ २ ॥
देवी पद्मावती तस्य पद्मा पद्मापतेरिव ।
निश्छद्मसद्म निःशेषगुणानामनणीयसाम् ॥ ३ ॥
इतश्च तस्मिन्नगरे गरीयो नागवेश्मनि ।
ईशान्यां दिशि नागानां प्रतिमाश्चिन्तितप्रदाः ॥ ४ ॥
आनर्चुस्ताः प्रतिदिनं नागरा भक्तिसागराः ।
उपयाचितसन्ताने सम्पूर्णे सति सर्वदा ॥ ५ ॥
आपृच्छ्य क्षितिपं तासां यात्रायै हर्षिताशया ।
अगात् पद्मावती देवी नागदैवतवेश्मनि ॥ ६ ॥
प्रतिबुद्धिर्महीपालः सम्भृकारोऽसमः श्रिया ।

इमामन्वगमद् देवीं केतकीमिव षट्पदः ॥ ७ ॥
पुष्पमण्डपिकां नागप्रतिमामनुनिर्मिताम् ।
विलोक्य मुद्गरं पौष्पं चाऽवदद् नृपपुङ्गवः ॥ ८ ॥
सुबुद्धे ! सचिवाधीश ! त्वमस्मत्प्रेषणोत्सवैः ।
ईदृक्स्वरूपं स्त्रीरत्नं जात्यरत्नमिवोज्ज्वलम् ॥ ९ ॥
राज्ञां वेश्मनि कुत्रापि दक्ष ! वीक्षितवानसि ।
कौसुमं मुद्गरं विभ्रद्भ्रमद्भ्रमरधोरणीम् ॥१०॥ (युग्मम्)
विहस्य सचिवाधीशः सुबुद्धिर्न्यगदद् नृपम् ।
त्वदादेशेन भूमीश ! गतोऽहं मिथिलां पुरीम् ॥११॥
कन्यकां कुम्भभूपस्य नेत्रसारङ्गवागुराम् ।
मनोऽध्वनीनविश्रामद्रुमच्छायासहोदरीम् ॥ १२ ॥
अनेकैर्लक्षणैः पुण्यैः पुण्यैरिव समन्विताम् ।
मल्लीमित्यहमद्राक्षमस्राक्षमपि संमदम् ॥ १३ ॥
तस्याः स्त्रीरत्नमुख्याया आयुर्ग्रन्थौ महीपते ! ।
विधीयते सकोऽप्युच्चैर्निस्सीमः पुष्पमुद्गरः ॥ १४ ॥
तवैष पुरतो यस्य लक्षांशेनापि सर्वथा ।
न भाति किन्तु विच्छायदर्पणत्वं दधात्यहो ! ॥१५॥
यद्येकदापि श्रीमल्लेर्दृश्ये रूपवैभवम् ।
तदा भूमिस्थितेनापि प्राप्यतेऽनिमिषस्थितिः ॥१६॥
मल्लेः प्रतिकृतिः स्वामिन् ! दर्पणेष्वेव दृश्यते ।
उपमानं महाम्भोधेर्महाम्भोधिर्निगद्यते ॥ १७ ॥
न मेरोरधिकः शैलो मानसाद् न परं सरः ।
नाकाशादधिकं किञ्चित् तद्रूपादधिकं नु किम् ? ॥१८॥
मल्लीरूपं न दृष्टं यैः स्फारतारैर्विलोचनैः ।
स मन्ये नररूपेण कूपमण्डूकसन्निभः ॥ १९ ॥
सकर्णकर्णपीयूषं श्रुत्वेति प्रतिबुद्धिराट् ।
रोमाञ्चैरञ्चितो देहे कदम्बः कुसुमैरिव ॥ २० ॥

स पूर्वजन्मनः स्नेहाद् वीरीतुमथ कन्यकाम् ।
दूतं प्रैषीद् निसृष्टार्थं कुम्भभूपान्तिके निजम् ॥ २१ ॥

इति मल्लिस्वामिपूर्वभवाचलप्रथमपरममित्रोत्पत्तिः ।

इतश्च–

च्युत्वा धरणजीवोऽपि वैजयन्तविमानतः ।
अभूत् चम्पामहापुर्यां चन्द्रच्छायाभिधो नृपः ॥ २२ ॥
विज्ञातजीवाऽजीवादितत्त्वः सत्त्वकृपापरः ।
चतुःपर्व्यां कृततपाः समाधिश्रितपौषधः ॥ २३ ॥
लब्धगृहीतपृष्टार्थो पिहितद्वारबन्धुरः ।
वस्त्रपात्राऽऽसनावासप्रदः साधुजनेष्वलम् ॥ २४ ॥
कृतज्ञो विनयी धीरः परनारीसहोदरः ।
तस्यामेव महापुर्यां श्रावकोऽर्हन्नयाह्वयः ॥ २५ ॥

( त्रिभिर्विशेषकम् )

सोऽन्यदा वार्द्धियात्रायै मनश्चक्रे महामतिः ।
क्षणमात्राद् दरिद्रघ्नं सामुद्रं पर्युपासनम् ॥ २६ ॥

यतः–

इक्षुक्षेत्रं समुद्रश्च योनिपोषणमेव च ।
प्रसादो भूभुजां चेति क्षणाद् घ्नन्ति दरिद्रताम् ॥२७॥
विविधं वित्तमादाय समेतः सुहृदां गणैः ।
असौ वारांनिधेस्तीरमचालीदचलाशयः ॥ २८ ॥
चारुवस्त्रपरीधानां गृहीताक्षतभाजनाम् ।
अर्थसिद्धिमिवाद्राक्षीदायान्तीं पुरतः स्त्रियम् ॥ २९ ॥
शकुनैः प्रेरितः पुण्यैरिव श्रेष्ठितनूद्भवः ।
प्राप वारांनिधेः कूलं मूलं वाणिज्यशालिनः ॥३०॥
स्वनामेव महाम्भोधेरावर्तादि विदन्ति ये ।
तेभ्यो निर्यामिकेभ्यः स्वं ददौ सांयात्रिकाग्रणीः ॥३१॥

नीलीगुग्गुललाक्षाश्च निम्बचीवरसंहतीः ।
असौ संग्राहयामास हरिद्रादि विशेषतः ॥ ३२ ॥
शुक्रवारेऽथ विस्फूर्जज्जैत्रवादित्रसुन्दरम् ।
पोतं प्रपूरयामास समुद्राचार्यपुरस्सरम् ॥ ३३ ॥
ध्रुवचक्रप्रमाणेन सिद्धान्तेनाऽथ साधुवत् ।
संचेरे सरितां नाथे पोतो वेगेन वायुवत् ॥ ३४ ॥
शक्रः सभामुपासीन उपार्हत्प्रयमार्हताः ।
त्रिदशानां पुरश्चक्रे वर्णनं कलया गिरा ॥ ३५ ॥
मनुष्यकीटको धर्माद्चाल्यस्त्रिदशैरपि ।
अवोचद् यद्वचः शक्रस्तद्याऽलीकयाम्यहम् ॥ ३६ ॥
इति ध्यात्वा सुरः कश्चिद् मत्सराध्मातमानसः ।
अधिवार्धि महामेघं विचक्रे व्योममण्डले ॥ ३७ ॥
नीलीरक्तेव सर्वत्र जजृम्भे घनमण्डली ।
पोतस्थजनजीवानां असने राक्षसीयिता ॥ ३८ ॥
सत्त्वहेम्नः परीक्षायां शाणायन्ते चिरद्युतः ।
गर्जितान्यपि जीवानां टात्कारा इव निग्रहे ॥ ३९ ॥
यथा यथा प्रवहणं कम्पते चैत्यकेतुवत् ।
तथा तथाऽङ्गिनां भीतिग्रहिलानि मनांस्यपि ॥ ४०॥
कम्पमाने प्रवहणे वीचिभिः पूरिताम्बरे ।
स्पर्धया धीवरा वारि चिक्षिपुश्चटसैर्बहिः ॥ ४१ ॥
विचक्रेऽथानिलं स्वर्गी झञ्झावातभयङ्करम् ।
येनेक्षणानि पोतस्था मिमीलुः स्वधिया समम् ॥४२॥
हा मातस्तात ! हा भ्रातर्हा बन्धो ! कुलदेवताः ! ।
अस्माकं कुरुताऽमुत्र साहाय्यं महदापदि ॥ ४३ ॥
इत्यादिलोकसंलापैः कर्णाय सूचिकोपमैः ।
व्यानशे रोदसीकूपो निर्भीमैर्गर्जितैः समम् ॥ ४४ ॥
कुम्भलक्षैः करिष्यामि स्नात्रं कुङ्कुमवाहिभिः ।

अमुष्माद् विधुरादाशु देवि ! तारय तारय ॥ ४५ ॥
एवंरूपा विदधिरे उपयाचितसंहतीः ।
आर्ता हि देवतापादभक्तिं विदधतेतराम् ॥ ४६ ॥
इत्युपद्रवमालोक्य स्मृतपञ्चनमस्कृतिः ।
पवित्रासनमासीनः प्रत्याख्यानसमाहितः ॥ ४७ ॥
वीतरागं मनोऽम्भोजे विदधानः शुभाशयः ।
श्रावकोऽर्हन्नयोऽस्मार्षीदनित्यादिकभावनाम् ॥४८॥
( युग्मम् )

अमुमीदृग्विधं वीक्ष्य क्षोभाय सुरपांसनः ।
विचक्रे रक्षसो रूपं कालरात्रिसहोदरम् ॥ ४९ ॥
मुखज्वालास्फुलिङ्गौघैर्द्यां खद्योतमयीमिव ।
कुर्वन् हास्यच्छटापातैः क्ष्मां फेनमयीमिव ॥ ५० ॥
पाददर्दुरिकाघातैरधः क्षोणीं क्षिपन्निव ।
उच्चैः कलकलारावं तन्वन् प्रलयरुद्रवत् ॥ ५१ ॥
उद्वहन् कर्तिकां पाणौ प्रेतभर्तुः प्रियामिव ।
ऊचे नक्तंचरः क्रूरो रे रे श्रावकपांसन ! ॥ ५२ ॥
मुञ्च धर्ममिमं मुञ्च नो चेत् कर्तिकयाऽमुया ।
पातयिष्यामि ते मुण्डमखण्डं फलवत्तरोः ॥ ५३ ॥
बलाद् बलिं करिष्यामि यादसां त्वां दुराशय ! ।
नाऽयं धर्मोऽर्गलो भावी पततोऽम्भोधिपाथसि ॥५४॥
आत्मानं श्रावकत्वेन भाषमाणः पदे पदे ।
कुरुषेऽम्बुनिधौ यात्रामहो ! निर्घृणधूर्वर ! ॥ ५५ ॥
एवं विभाषमाणेऽस्मिन्नर्हन्नय उपासकः ।
स्वध्यानाद् नाऽचलच्छैलः किं वातेन प्रकम्प्यते? ॥५६॥
भद्र ! सौधर्मशक्रेण संस्तुतोऽसीति पर्षदि ।
त्रिदशैरपि स्वधर्मादचाल्योऽर्हन्नयः सुधीः ॥ ५७ ॥
तत्प्रशंसामिमां श्रुत्वा परीक्षार्थमिहाऽऽगमम् ।

ममेदृक् चेष्टितं सर्वं क्षमस्व करुणानिधे ! ॥ ५८ ॥
शिलोच्चय इवासि त्वं मनागपि न कम्पितः ।
मत्तस्य दन्तिनो दन्तघातेनेव मया ननु ॥ ५९ ॥
दिव्यं कुण्डलयोर्द्वन्द्वं तस्मै दत्त्वा स नाकसद् ।
संहृत्य मेघवातादि तिरोऽभूदभ्रगेन्दुवत् ॥ ६० ॥
क्षेमेणाऽर्हन्नयो वार्धिं तीर्त्वा गोष्पदवत् क्रमात् ।
गृहीताऽशेषभाण्डौघो नगरीं मिथिलां गतः ॥६१॥
एकं श्रीकुम्भभूपस्य प्राभृते कुण्डलद्वयम् ।
ददेदेऽर्हन्नयः पोतवाहकः सादराशयः ॥ ६२ ॥
तदेवं पृथिवीनाथस्तां दिव्यां कुण्डलद्वयीम् ।
दुहित्रे नेत्रमित्रायै श्रीमल्यै मल्लये ददौ ॥ ६३ ॥
अर्हन्नयाय पात्रज्ञो दत्त्वोच्चैः पारितोषिकम् ।
विससर्ज महीपेन्दुर्यथाऽम्बु जलधिर्घनम् ॥ ६४ ॥
क्रीतविक्रीतनिःशेषभाण्डश्चम्पामुपागतः ।
चन्द्रच्छायनरेन्द्रस्य सभामण्डपमभ्यगात् ॥ ६५ ॥
चकार प्राभृते श्रेष्ठी द्वितीयां कुण्डलद्वयीम् ।
पदार्थाः खलु युज्यन्त उत्तमानामिहोत्तमाः ॥ ६६ ॥
राजोचेऽर्हन्नय ! श्रेष्ठिन् ! कुतोऽदः प्राप्तमीदृशम् ?।
नेदृग् मर्त्यतले भावि कान्त्या जितदिवाकरम् ॥६७॥
आदौ समुद्रवृत्तान्तं विधाय श्रेष्ठिनन्दनः ।
अन्ते वितत्य चम्पाया आगमं सर्वमब्रवीत् ॥ ६८ ॥
केयं मल्लीति पप्रच्छ चन्द्रच्छायक्षितीश्वरः ।
अपूर्वश्रवणे यत्नः किं सकर्णस्य नो भवेत् ? ॥ ६९ ॥
अथाऽसौ न्यगदच्छ्रेष्ठी देव ! श्रीमिथिलापुरि ।
विजयी श्रीकुम्भभूपाल इक्ष्वाकुकुलभूषणम् ॥ ७० ॥
तत्सुता जननेत्राणामध्वगानामिव प्रपा ।
मल्लिर्मल्लिस्मिता चारुगुणवल्लीव जङ्गमा ॥ ७१ ॥

धुरो यस्या मुखस्योच्चैर्निर्माल्यमिव चन्द्रमाः ।
यस्याश्च नेत्रयोर्लक्ष्मीरलक्ष्मीरम्बुजव्रजे ॥ ७२ ॥
इत्थमाकर्ण्य चन्द्रेशः प्राग्जन्मस्नेहमोहितः ।
मल्लीं वरीतुं प्राहैषीद् दूतं कुम्भमहीपतेः ॥ ७३ ॥
॥ इति श्रीमल्लिस्वामिपूर्वभवद्वितीयमित्रोत्पत्तिः ॥
इतश्च पूरणप्राणी वैजयन्तं विहाय सः ।
श्रावस्त्यामभवत् पुर्यां रुक्मी नाम क्षितीश्वरः ॥७४॥
तस्याऽभूद्धारिणी नाम स्वर्देवीव महीचरी ।
रूपातिशायिनी शान्ता कान्ताकारा सुलक्षणा ॥७५॥
अजनिष्ट तयोः सौम्या सुबाहुर्नाम कन्यका ।
लक्ष्मीरिव सुरेन्द्रस्य समुद्रस्येव वार्धिजा ॥ ७६ ॥
साऽतीव धरणीभर्तुः स्वप्राणेभ्योऽपि वल्लभा ।
इतरेभ्योऽप्यपत्यानि किं पुनः पृथिवीभुजाम् ? ॥७७॥
साऽन्येद्युः परिवारेण चतुर्मास्यां विशेषतः ।
अकार्यततरां स्नानक्षणं मङ्गल्यपूर्वकम् ॥ ७८ ॥
अन्तःपुरवधूलोकैर्मुदितैः स्नपिताऽसकौ ।
लवणोत्तारणायुक्तवस्त्रालङ्कारपूर्वकम् ॥ ७९ ॥
अङ्गीवङ्गीप्रभृतिभिश्चेटीभिः परिवारिता ।
प्रणन्तुं जनकं प्राप सभामण्डपमुत्तमम् ॥८०॥ ( युग्मम् )
तामुत्सङ्गे समारोप्य वल्लकीमिव सद्गुणाम् ।
सौविदल्लामभाषिष्ट नृपः प्रेमतरङ्गितम् ॥ ८१ ॥
कन्यायात्रोत्सवो मद्युखेदृग्वीक्षितः क्वचित् ।
अथ स्मित्वाऽवदद् सौ राजन् ! शृणु गिरं मम ॥८२॥
त्वदादेशेन भूमीश ! गतोऽहं मिथिलापुरीम् ।
श्रीकुम्भस्वामिनः पुत्र्याः श्रीमल्लेः प्रवरद्युतेः ॥८३॥
आयुर्ग्रन्थौ भवत्पुत्र्याः स कोऽपि स्नपनक्षणः ।

१ 'कलाकलापकलिता भाग्यभङ्गया महोत्पलम्' इत्यपि पाठः ।

यः स्वर्गेऽपि न संभाव्यः किं पुनः पृथिवीतले?॥८४॥
जलधेर्जलधिर्यद्वत् सुधायाश्च सुधा यथा ।
मल्लिरूपस्य तादृप्यं मल्ले रूपे व्यवस्थितम् ॥ ८५ ॥
मर्त्यमण्डलपाथोधेः स्त्रीरत्नं पृथिवीतले ।
तदेवोत्पन्नमाभाति जगन्नयनकार्मणम् ॥ ८६ ॥
श्रुत्वेति प्राग्भवस्नेहाद् भूमिनाथेन रुक्मिणा ।
अप्रेष्यततरां दूतो निसृष्टार्थो धियां निधिः ॥ ८७ ॥

॥ इति श्रीमल्लिस्वामिपूर्वभवतृतीयमित्रपूरणोत्पत्तिः ॥

इतश्च वसुजीवोऽपि वैजयन्तविमानतः ।
च्युत्वा वाणारसीपुर्यां शङ्खो नाम नृपोऽजनि ॥८८॥
श्रीमल्लेः कुण्डलद्वन्द्वं तद्दिव्यं दैवयोगतः ।
तदा विजघटे कामं रामणीयकमन्दिरम् ॥ ८९ ॥
राज्ञा संघट्टनायाऽस्य मीलिताः स्वर्णकारकाः ।
तद्वीक्ष्य शून्यमनसोऽभूवन् संज्ञीतरा इव ॥ ९० ॥
देव ! दिव्यमिदं दीप्यद् नो संघट्टयितुं क्षमाः ।
दिव्यानां हि पदार्थानां दिव्या एव विधायिनः॥९१॥
ततो निर्वासिता राज्ञा रुष्टेन स्वर्णकारकाः ।
नृपाऽप्रसादादीदृक्षं न दूरे पुरवासिनाम् ॥ ९२ ॥
ते च वाराणसीं गत्वा प्रणेमुः शङ्खभूभुजम् ।
कौतस्कुता इति क्ष्मापः पप्रच्छ मधुराक्षरम् ॥९३॥
देवाऽमी मिथिलापुर्यां वासिनः स्वर्णशिल्पिनः ।
विज्ञानवल्लरीजालप्रावृट्कालघनाघनाः ॥ ९४ ॥
वसतां तत्र चास्माकं पूर्वजानां महीपते ! ।
वेणयः सप्त संभूताः स्वर्णताडनभाजिनाम् ॥ ९५ ॥
मिथिलास्वामिना कुम्भराज्ञा कुण्डलयोजने ।
अनीशा ईश ! सर्वेऽमी पूर्या निर्वासिता हठात् ॥९६॥
कुण्डलप्रक्रमप्राप्तं श्रीमल्ले रूपमुत्तमम् ।

सद्वर्णैर्वर्णयामासुर्हर्षोत्कर्षमुपागताः ॥ ९७ ॥
आस्यस्य पुरतो यस्याः शङ्के दासायते शशी ।
एतावतैव तद्रूपमसरूपं निरूप्यते ॥ ९८ ॥
पूर्वस्नेहातिरेकेण तद्रूपश्रवणादपि ।
श्रुत्वेति तां वरीतुं तु विशिष्टं विससर्ज सः ॥ ९९ ॥

॥ इति श्रीमल्लिस्वामिपूर्वभवचतुर्थवसुमित्रोत्पत्तिः ॥

जीवो वैश्रमणस्याऽथ वैजयन्तात् परिच्युतः ।
अदीनशत्रुनामाऽभूद् भूपालो हस्तिनापुरे ॥ १०० ॥
इतश्च—
श्रीमल्लेरनुजो मल्लो नाम्ना यौवनमागतः ।
आजूहवच्चित्रकरान् लेप्यकर्मविशारदान् ॥ १०१ ॥
भित्तिर्विभज्य तेभ्योऽसौ गोत्रिभ्य इव सम्पदः ।
सचित्रं कारयामासोन्मीलितं भागवर्तनैः ॥ १०२ ॥
तेष्वेकश्चित्रकृद्वर्यो लब्धदैवतसद्वरः ।
एकाङ्गदर्शनेनाऽपि यथावस्थितरूपवित् ॥ १०३ ॥
अन्तर्जवनिकं पादाङ्गुष्ठं मल्लेर्निरीक्ष्य सः ।
यथावद्रूपमलिखत् सर्वाङ्गोपाङ्गशोभनम् ॥ १०४ ॥
मल्लस्तत्राऽगमत् क्रीडारसिको मित्रसंयुतः ।
श्रीमल्लिस्वामिनीरूपं चित्रस्थमवलोकयत् ॥ १०५ ॥
साक्षात्स्वसारमूर्ध्वस्थां मन्यमानस्तथा पदैः ।
लज्जया प्रसरत्कुल्याजलवत् सेतुहेतुना ॥ १०६ ॥
( युग्मम् )
निवृत्तं वेगतो धात्री दृष्टिपात्रीचकार तम् ।
कथं पुत्र ! निवृत्तोऽसि त्वरितं त्वरितैः पदैः?॥१०७॥
कुमारोऽप्यब्रवीदेवं मातर्मे भगिनी पुरः ।
ऊर्ध्वा समस्ति खेलामि कथं मित्रैरहं वृतः? ॥१०८॥
सम्यग् निरूप्य धात्र्योचे नेयं मल्ली तव स्वसा ।

किन्तु चित्रकृता पुत्र ! कृता भ्रान्तिप्रदा मुदा॥१०९॥
अथ क्रुद्धोऽनुजो मल्लेस्तस्य चित्रकृतो भृशम् ।
निकृत्य दक्षिणं पाणिं स्वदेशाद् निरवासयत्॥११०॥
विष्वग् भ्राम्यन् महीपीठं गतवान् हस्तिनापुरे ।
अदीनशत्रुभूपाय नमश्चक्रे कृताञ्जलिः ॥ १११ ॥
स्ववृत्तान्तं यथाभूतं मूलादारभ्य भूभुजः ।
श्रीमल्लिस्वामिनीरूपमेवं वर्णितवानथ ॥ ११२ ॥
नदीनां स्वर्धुनी यद्वत्सुमनस्स्वपि मालती ।
यद्वत् कामगवी गोषु तद्वद् रूपवतीषु सा ॥११३॥
न दृष्टा येन सा मल्लिर्मनःकेकिघनाघनः ।
तस्य नेत्रद्वयं वितथयुगमश्चति ॥११४॥
यदीयं लिह्यते रूपं लोचनैश्चुलुकैरिव ।
यदीयं वर्ण्यते चारुचरितं कविकुञ्जरैः ॥११५॥
एवं तद्वर्णनां कृत्वा चित्रकृच्चित्रसंस्थिताम् ।
अर्चामदर्शयद् मल्लेर्दृशोरायुण्यकारिणीम् ॥११६॥
वीक्ष्येमां विस्मितः पूर्वस्नेहमोहितमानसः ।
तद्याचनाय दूतं स्वं प्रैषीदुपमहीपति ॥११७॥
॥ इति श्रीमल्लिस्वामिपूर्वभवपरममित्रपञ्चमवैश्रमणोत्पत्तिः ॥
इतश्च जम्बूद्वीपेऽस्मिन् काम्पिल्यनगरे वरे ।
अभिचन्द्रस्य जीवोऽपि च्युत्वा तस्माद्विमानतः॥११८॥
जितशत्रुर्यथार्थाख्यः समभूत्पृथिवीपतिः ।
यत्प्रतापाद् विलीयन्ते द्विषः स्त्यानाज्यपिण्डवत्॥११९॥
(युग्मम्)
धारिणीप्रमुखास्तस्य सहस्रं प्राणवल्लभाः ।
अगण्यपुण्यलावण्या भूचर्यो देवता इव ॥ १२० ॥
इतोऽभूद् मिथिलापुर्यां चोक्षा नाम विचक्षणा ।
मन्त्रकार्मणरत्नानां रोहणाचलचूलिका ॥ १२१ ॥

त्रिदण्डमण्डितकरक्रोडा काषायिताम्बरा ।
शौचाय दधती दर्भसगर्भां जलकुण्डिकाम् ॥ १२२ ॥
( युग्मम् )

साऽन्यदा कुम्भभूपस्य कन्यान्तःपुरमुत्तमम् ।
अस्खलितगतिरगात् सा वात्येव निरत्यया ॥१२३॥
श्रीमल्लिस्वामिपादान्ते सोपाविक्षद् यथाविधि ।
निजं दर्शयितुं धर्मं दम्भसंरम्भया गिरा ॥ १२४॥
जलशौचमयो धर्मस्तया ख्यातः सविस्तरः ।
तस्याः पुरः पुराणस्य वाक्यैर्वाक्यविधिज्ञया ॥१२५॥
अथ प्रोवाच श्रीमल्लिर्धर्मोऽस्ति जलसङ्गमात् ।
जितं तर्हि झषैर्लोके जलस्थाननिवासिभिः ॥१२६॥
सैवं शैवं निराचक्रे शौचधर्मं सुयुक्तिभिः ।
मुखमर्कटिकां दत्त्वा तां चेट्यो निरवासयन् ॥१२७॥
भवेद् यथेयं दुःखार्ता सपत्नीजनमध्यगा ।
तथा वेगात् करिष्यामि सा यान्तीति व्यचिन्तयत् ॥
एवं विचिन्त्य दर्पेणाध्माता निर्गत्य पूर्वरात् ।
काम्पिल्यनगरं प्राप पञ्चालमुखमण्डनम् ॥ १२९ ॥
जितशत्रुः सभाप्राप्तां तां वीक्ष्य स्मितचक्षुषा ।
विष्टरं दापयामास पूजनीया हि लिङ्गिनी ॥ १३० ॥
महत्या प्रतिपत्त्या सा पूजिता जगतीभुजा ।
औचित्याचरणं सन्तः शिक्ष्यन्ते किमु तादृशाः?॥१३१॥
सा प्रोदिताशीर्वचना तदासनमशिश्रियत् ।
आशीर्मूलधनं यस्मादक्षयं लिङ्गधारिणाम् ॥ १३२ ॥
साऽवाचयत महीभर्त्रा महाभक्तितरङ्गितम् ।
नृपप्राणप्रियाभिश्च, पतिमार्गाऽनुगाः स्त्रियः ॥१३३॥
जलशौचपरो धर्मो राजन् ! राजीवलोचने ! ।
न भूतो न च संभावी प्रेत्याऽमुत्र प्रियङ्करः ॥१३४॥

एवमाख्याय विरतां तामुदीक्ष्य नृपोऽवदत् ।
भगवत्यखिला दृष्टा मही सागरमेखला ॥ १३५ ॥
ईदृगन्तःपुरं मातः ! कापि दृष्टं कचिच्छ्रुतम् ? ।
त्वादृशा दूरदृश्वानो यद्भवन्ति व्रतस्थिताः ॥ १३६॥
विलक्षं विस्मितं कृत्वा चोक्षोचे भूभुजं प्रति ।
कूपमण्डूकसंकाशो राजन् ! त्वमसि भूतले ॥१३७॥
या श्रीमन्मिथिलापुर्यां कुम्भराजस्य पुत्रिका ।
श्रीमल्लिस्वामिनी देवललनाललिताकृतिः ॥ १३८ ॥
तस्याः पादद्वयाङ्गुष्ठसंपदः पुरतस्तव ।
इदमन्तःपुरं सर्वमङ्गारादपि हीयते ॥ १३९ ॥
शरीरलक्ष्मीः सा काऽपि यस्या उपमितिः कचित् ।
न विद्यते त्रिभुवने किमन्यत्परिगद्यते ? ॥ १४० ॥
जितशत्रुरिति श्रुत्वा प्राग्जन्मस्नेहमोहितः ।
उपकुम्भमयुङ्क्ताऽसौ तत्कृते दूतमग्रिमम् ॥ १४१ ॥

॥ इति श्रीमल्लिस्वामिप्राग्भवषष्ठमित्राऽभिचन्द्रोत्पत्तिः ॥

इत्थं प्राग्जन्ममित्राणां षण्णामपि महाधियाम् ।
समागुर्युगपद् दूता मिथिलायां महापुरि ॥ १४२ ॥
ज्ञानत्रयधरः स्वामी मल्लिस्तेषु कृपापरः ।
एवं विनिर्ममौ यस्मात्प्रतिबोधोद्यता जिनाः ॥१४३॥
अशोकवनिकायां तु स्वर्णभित्तिविकस्वरे ।
सौधमध्यापवरके रत्नपीठमनोहरे ॥ १४४ ॥
आत्मनः सदृशीं हैमीं प्रतिमां सदलङ्कृताम् ।
इन्द्रनीलदृशं सोमां विद्रुमाधरपल्लवाम् ॥ १४५ ॥
कज्जलश्यामलकचां प्रवालारुणपाणिकाम् ।
सद्वर्णां कलशाकारशिरसं लटभभ्रुवम् ॥ १४६ ॥
अजानुदोर्युगां मध्यतुच्छां स्वच्छतनुद्युतिम् ।

गूढगुल्फां इत्तजङ्घां त्रिवलीभिस्तरङ्गिताम् ॥ १४७ ॥
( पञ्चभिः कुलकम् )
तस्यापवरकस्योच्चैः पुरो भित्तावकारयत् ।
षड् द्वाराणि कपाटाभ्यां पिहितानि बृहन्ति च॥१४८॥
द्वाराणां पुरतस्तेषां लघ्वपवरिकास्तु षट् ।
प्रतिमापृष्ठभागेऽपि द्वारमेकमकारयत् ॥ १४९ ॥
आतालुशुषिरोदर्यामर्चायां त्रिजगद्गुरुः ।
सकलाहारपिण्डीं तु प्रक्षिप्य बुभुजेऽन्वहम् ॥१५०॥
इतश्चैषां समं दूताः श्रीकुम्भनृपवेश्मनि ।
आगत्य प्रणिपत्येदं क्रमेणाऽथ बभाषिरे ॥१५१॥
देव ! साकेतपूर्नाथशत्रून्माथप्रतापवान् ।
प्रतिबुद्धिः सुबुद्धीनां रत्नानामिव सेवधिः ॥ १५२ ॥
वीरभोगीणदोर्दण्डो महाबाहुर्महाबलः ।
रूपन्यक्कृतकन्दर्पः सदर्पपरिविग्रहः ॥ १५३ ॥
स्वेष्टसोदरवद् मेने यो धर्मं धर्मवत्सलः ।
गुरुवाक्यमिवाऽमंस्त वचनं मन्त्रिणां शुचि ॥१५४॥
असौ मल्लीं तव सुतां परिणेतुं महीपतिः ।
याचते हि सतां याच्ञा विफलाऽपि न ह्रीकरी॥१५५॥
यस्य कस्याऽपि देयेयं कन्या परधनं यतः ।
जामाता त्वीदृशः प्राप्यो न कुत्राऽपि गवेषितः॥१५६॥
अथ द्वितीयदूतोऽपि जगाद वदतां वरः ।
देव ! चम्पापुरीस्वामी पीनस्कन्धो महाभुजः ॥१५७॥
कुल्यः कलङ्कविकलः सत्यगीः सत्यसङ्गरः ।
सङ्गरार्जितसत्कीर्तिः कीर्तनीयगुणोत्करः ॥ १५८ ॥
पूर्णेन्दुवदनच्छायश्चन्द्रच्छायाक्षितीश्वरः ।
मार्गयति तव सुतां मल्लीमुद्वाहपर्वणि ॥ १५९ ॥
तृतीयेनाऽपि बभणे श्रावस्तीनगरीश्वरः ।

अग्रणीर्भटकोटीनां कृतज्ञः प्राज्ञपुङ्गवः ॥ १६० ॥
निकषः शूरताहेम्नः शरण्यः शरणार्थिनाम् ।
उद्यानं दानदाक्षिण्यस्थैर्यधैर्यमहीरुहाम् ॥ १६१ ॥
रुक्मी नाम महीपालः पालितक्षत्रियव्रतः ।
परिणेतुं महानन्दात् कन्यकां तव वाञ्छति ॥१६२॥
( त्रिभिर्विशेषकम् )

चतुर्थोऽप्यब्रवीदेवं देव ! काशीपुरीश्वरः ।
निशाकरोज्ज्वलयशाः कल्पद्रुरनुजीविनाम् ॥ १६३ ॥
नयकन्दलिनीमेघोऽमोघगीरघहानिकृत् ।
दानशौण्डः प्रतापेन दुर्निरीक्षः खरांशुवत् ॥ १६४ ॥
सदा सदाचारपथप्रवीणः क्षितिनायकः ।
शङ्खभूपानिमां पाणिगृहीतीं कर्तुमीप्सति ॥ १६५ ॥
( त्रिभिर्विशेषकम् )

इतश्च पञ्चमोऽप्यूचे यद्धास्तिनपुरेश्वरः ।
स्मररूपोपमः संख्यनिर्व्यूढप्रौढविक्रमः ॥ १६६ ॥
सालप्रांशुर्महास्कन्धो गुणज्ञो गुणिनां वरः ।
अदीनशत्रुभूपालस्त्वत्कन्यां हन्त ! याचते ॥ १६७ ॥
( युग्मम् )

षष्ठोऽपीत्थमथोवाच देव ! काम्पील्यभूपतिः ।
अमेयसेनो निर्मायः शुनासीरपराक्रमः ॥ १६८ ॥
जितान्तरारिषड्वर्गो जितदुर्दान्तशात्रवः ।
जितशत्रुस्तव सुतां मद्वाचा याचतेतराम् ॥ १६९ ॥
(युग्मम्)

श्रुत्वेदं कुम्भराजोऽपि जगादैवं कृतक्रुधः ।
ईदगाशापराः किं वः स्वामिनो नेह लज्जिताः?॥१७०॥
त्रैलोक्यजनतारत्नं कन्यारत्नमनुत्तरम् ।
शक्रैरपि नमस्कार्यं विवाहाय कथं भवेत् ?॥ १७१ ॥

अस्या जन्मनि देवाद्रौ मिमीलुस्त्रिदशेश्वराः ।
अस्याः शरीरवृद्धिश्च बभूव सुधयाऽन्वहम् ॥ १७२ ॥
येनाऽचिन्ति विरूपं भो एनां प्रति दुराशया ।
तस्यार्जमञ्जरीवोच्चैरस्फुटत् खण्डशः शिरः ॥१७३॥
वधार्हो अपि भो ! नूनं विमुक्ता दौत्यकर्मणा ।
स्त्रीबालदूतमूकादीन् न घ्नन्ति न्यायवेदिनः ॥१७४॥
भ्रूसंज्ञामेरिता राजपुरुषाः परुषाक्षरम् ।
शीघ्रं निष्काशयामासुरेतांस्ताडनपूर्वकम् ॥ १७५ ॥
एवं ते न्यक्कृताः कामं गत्वाऽख्यन् स्वामिनोऽखिलम् ।
अथ तेषां मनःकुण्डे क्रोधवह्निरदीप्यत ॥ १७६ ॥
प्रयाणभेरीभाङ्कारैर्दूरं दूरं प्रसर्पिभिः ।
व्यानशे रोदसीकूपो नदीघोषैरिवार्णवः ॥ १७७ ॥
तेषां बलजलैर्लोलैराच्छाद्यत समन्ततः ।
प्रलयक्षुभिताम्भोधिवीचीभिरिव भूतलम् ॥ १७८ ॥
चेलुः षडपि मानार्ता मूर्ता वर्षधरा इव ।
विततैर्ध्वजिनीपक्षैः क्षोभयन्तः क्षितेस्तलम् ॥१७९॥
रथै रथमयीवाभूद् गजैर्गजमयीव भूः ।
अश्वैरश्वमयीवाऽपि भटैर्भटमयीव नु ॥ १८० ॥
धातुमत्तामिव कुथान् विकिरन्तो विकस्वराम् ।
गण्डशैलश्रियं भेजुर्जङ्गमां गन्धहस्तिनः ॥ १८१ ॥
कुर्वाणाः स्थलवद् धूलीपटलीभिः सरांस्यपि ।
स्थलान्यपि हयखुरपुटैश्च कमलाकरान् ॥ १८२ ॥
स्फारस्फारस्फटावन्तश्चन्दनद्रुलतामिव ।
देहयष्टिमिव श्वासनिरोधाद् योगवेदिनः ॥ १८३ ॥
प्रवेशनिर्गमद्वारं निषेधन्तः पदे पदे ।
अरुन्धन् मिथिलां वार्धिवीचयो द्वारकामिव ॥१८४॥
( त्रिभिर्विशेषकम् )

तेन रोधेन कुम्भोऽपि खिन्नाऽखिन्नः कदाचन ।
चिन्तासन्तानवान् जज्ञे हृतपाणिस्थवित्तवत् ॥१८५॥
उद्विग्ना इव किं तातपादास्तिष्ठन्ति साम्प्रतम् ? ।
इत्यूचे भगवान् मल्लिर्योजिताञ्जलिकुड्मलः ॥ १८६ ॥
उद्वेगकारणं रोधलक्षणं क्षितिनायकः ।
सर्वमाख्यत् पुरो मल्लेः सद्गुरोरिव भाविकः॥१८७॥
मल्लिरप्यवदत् तात ! युगपद् गूढपूरुषैः ।
युष्मभ्यं दास्यते मल्लीत्युक्त्वा सर्वान् प्रबोधय॥१८८॥
आकार्या मम ते सर्वे ततोऽपवरकेष्वपि ।
प्रच्छन्नाः सायमानेयाः स्वल्पलोकपरिच्छदाः ॥१८९॥
तथैव विहिते सायं राजानो मुदिताशयाः ।
उपागताः पुरो मल्लेः प्रतिमां वीक्ष्य विस्मिताः॥१९०॥
मल्लीति ददृशे दिष्ट्या ध्यायन्त इव चेतसि ।
कृतकृत्यममन्यन्त स्वात्मानं सिद्धमन्त्रवत् ॥१९१॥
पृष्ठद्वारविभागेन प्रतिमाया नृपात्मजा ।
उद्घाटयत् प्रतिमान्तःस्थितं तालुचीवरम् ॥ १९२ ॥
निक्षिप्तक्वथितग्रासगन्धः प्रासरदुत्कटैः ।
दुःसहो लशुनस्येव सर्वतोऽपसरज्जनः ॥ १९३ ॥
अहिगोश्वानमृतकदुर्गन्धादपि दुःसहः ।
गन्धः षण्णामपीशानां व्यानशे नासिकापुटीम् ॥१९४॥
तद्गन्धाच्छातकुन्ताग्रप्रहारादिव कातराः ।
अधोमुखा अजायन्त मृतप्रियसुता इव ॥ १९५ ॥
तानवाचो विलोक्योच्चैरूचे मल्लिर्जगद्गुरुः ।
किं यूयं न्यङ्मुखा जाता भारार्तशिरसो यथा?॥१९६॥
सोढुं न शक्नुमो नूनममुं दुर्गन्धमुत्कटैः ।
एवं बभाषिरे वस्त्रप्रान्तैः पिहितनासिकाः ॥१९७॥
तान् स्वामी प्रत्युवाचेदं प्रतिबोधपरायणः ।

सौवर्णी प्रतिमा यद्वद् दृश्यमाना मनोहरा ॥ १९८ ॥
तथा वराङ्गनाः स्मेरनीलेन्दीवरलोचनाः ।
विण्मूत्रश्लेष्ममज्जासृग्मलधातुप्रपूरिताः ॥ १९९॥
अकाम्यानपि रामाणां काम्यानिव शरीरके ।
शरीरांशान् प्रपश्यन्त्यनुरागहतलोचनाः ॥ २०० ॥
पीतोन्मत्तो यथा लोष्टं सुवर्णं मन्यते जनः ।
तथा स्त्रीसङ्गजं दुःखं सुखं मोहान्धमानसः ॥२०१॥
जटी मुण्डी शिखी मौनी वल्कली सुतपा अपि ।
ब्रह्माऽप्यब्रह्मशीलश्चेत्तदा मह्यं न रोचते ॥ २०२॥
कण्डूयन् कच्छुरः कच्छूं यथा दुःखं सुखीयति ।
दुर्वारमन्मथावेशविवशो रतिजं तथा ॥ २०३ ॥
नार्यो यैरुपमीयन्ते काञ्चनप्रतिमादिभिः ।
आलिङ्ग्यालिङ्ग्य तान्येव किमु कामी न तृप्यति?॥२०४॥
यदेवाङ्गं गोपनीयं कुत्सनीयं च योषिताम् ।
तत्रैव हि जनो रज्यन् केनाऽन्येन विरज्यते? ॥२०५॥
मोहादहह ! नारीणामङ्गैर्मांसास्थिनिर्मितैः ।
चन्द्रेन्दीवरकुन्दादि सदृक्षीकृत्य दूषितम् ॥ २०६ ॥
एवं संसारकारायां रामाया रूपवर्णनाम् ।
श्रुत्वा कुर्वन्तु मा रागमङ्गनाङ्गस्य सङ्गमे ॥ २०७ ॥
इतो भवात् तृतीये मे भवन्तः सुहृदोऽभवन् ।
समानवयसस्तुल्यभुक्तवैषयिकक्षणाः ॥ २०८ ॥
युगपत् तुल्यनिर्मुक्तसावद्यावद्यचेष्टिताः ।
युगपत् तुल्यविहितचतुर्थादितपःपराः ॥ २०९ ॥
स्मरतेति न किं यूयं प्राक्तनं भवचेष्टितम् ? ।
अहं वः सप्तमं मित्रं कथाख्यानाद् महाबलः ॥२१०॥
श्रुत्वेदं वचनं वाणीदेवताहस्तपुस्तकम् ।
जातिस्मरणमेतेषामुत्पेदे कर्मलाघवात् ॥ २११ ॥

अथ जालकपाटानि तीर्थेश उदघाटयत् ।
एतेऽभ्यागत्य सर्वेऽपि प्रमोदाश्रुजलाविलाः ॥२१२॥
प्रबोधोन्मुक्तकालुष्याः शारदीन घनाइव ।
भगवन्तं प्रणम्यैदमाख्यन् षडपि भक्तितः ॥२१३॥
स्मरामः प्राग्भवे पूज्यपादाः ! सप्ताऽपि सत्तपः ।
अकृष्महि चतुर्थादि कर्मघर्मघनोदयम् ॥ २१४ ॥
बोधिता अधुना स्वामिपादैर्देशनयाऽनया ।
आदिशन्तु विधेयं यद्भवन्तो गुरवो हि नः ॥२१५॥
अथोवाच जगन्नाथः पाथःपूर्णघनस्वनः ।
अहं संसारकान्तारं विमुच्याऽनिष्टगेहवत् ॥ २१६ ॥
मुक्तिसंवननं कर्मनिर्नाशनकृतोद्यमम् ।
सत्तपस्यां ग्रहीष्यामि भविष्यामि च निर्ममः ॥२१७॥
( युग्मम् )
स्वामिन्नमी वयं तावद् युष्मन्मार्गप्रवर्तनम् ।
करिष्यामो गुरोर्मार्गे प्रवृत्तानां शुभं नृणाम् ॥२१८॥
इत्युदीर्य पुनर्नाथं नमस्कृत्य शुभाशयाः ।
षडपि क्ष्माभुजोऽगच्छन् स्वां पुरीं स्वबलैः सह॥२१९॥
इतः पञ्चमकल्पस्य विमानेऽरिष्टनामनि ।
लोकान्तिकानां देवानामासनानि चकम्पिरे ॥२२०॥
तत्कम्पादवधिज्ञानप्रयोगादपि ते सुराः ।
सारस्वतादयः सर्वेऽजानन् दीक्षाक्षणं प्रभोः॥२२१॥
एत्य श्रीमल्लिनाथाग्रे तेऽवोचन्निति भक्तितः ।
सर्वजगज्जीवहितं स्वामिन् ! तीर्थं प्रवर्तय ॥ २२२ ॥
स्वामी गार्हस्थ्यवासेऽपि वैराग्यैकनिकेतनम् ।
विज्ञप्तस्तैर्विशेषेण दीक्षायां सत्वरोऽजनि ॥ २२३ ॥
अथ वात्सरिकं दानं समारेभे जगत्पतिः ।
सर्वे येन महारम्भा दानपूर्वा महात्मनाम् ॥ २२४ ॥

शृङ्गाटकचतुष्कादिस्थानेषु प्रतिवासरम् ।
आरभ्य सूर्योदयतो घोषणां स्वाम्यकारयत् ॥२२५॥
यो येनार्थी स तद्वस्तु गृह्णातु निजयेच्छया ।
एवं वर्षावधि प्रातः प्रातरुद्घोष्यते जनैः ॥ २२६ ॥
धनानि धनदो यक्षः शक्रादेशाद् दिने दिने ।
आहृत्य भ्रष्टनष्टानि पूरयत्यम्बुवद् घनः ॥ २२७ ॥
सर्वत्रेच्छानुमानेन दीयन्ते कुञ्जरा हयाः ।
रथाभरणवस्त्राणि रत्नानां राशयस्तथा ॥ २२८ ॥
करभा वेसराश्चापि नगराणि गुरूण्यपि ।
ग्रामग्रामा धराऽऽरामा यथाकामं धनादयः ॥२२९॥
( युग्मम् )

स्वेच्छया याचमानेभ्यो यद् गृहाद्वस्तु दीयते ।
पल्यङ्कासनयानादि संख्यातुं शक्यते न तत् ॥२३०॥
कोटीमेकां सुवर्णस्य लक्षाण्यष्टौ दिने दिने ।
सूर्योदयात्प्रातराशकालं यावद् ददौ विभुः ॥ २३१ ॥
सर्वाङ्कं दत्तवान् स्वामी हेमकोटित्रयीशतम् ।
अष्टाशीतिं च कोटीनां लक्षाशीतिं च सर्वतः॥२३२॥
सांवत्सरिकदानान्ते सौधर्माधिपतिः स्वयम् ।
दीक्षोत्सवं विधित्सुः सन् समागाच्चलितासनः॥२३३॥
सलिलापूर्णसौवर्णकुम्भसम्भृतपाणिभिः ।
सुरैः शक्रः समं दीक्षाभिषेकं कृतवान् प्रभोः॥२३४॥
विलिलेप प्रभोरङ्गं दिव्यैर्गोशीर्षचन्दनैः ।
मौलौ सन्तानपुष्पैश्चाऽबध्नाद् धम्मिलमद्रिभित् ॥२३५॥
वासांस्यलङ्कृतीः शक्रः स्वामिनं पर्यधापयत् ।
जयन्तीनामशिबिकां रचयामास च स्वयम् ॥२३६॥
दत्तहस्तसुरेन्द्रेणारुरोहैनां जगद्गुरुः ।
पश्चादमर्त्यैर्मर्त्यैश्चाग्रभागे सा समुद्धृता ॥ २३७ ॥

पार्श्वतो मल्लिनाथस्य चकाते चामरद्वयम् ।
धर्मशुक्लाभिधध्यानयुग्मं मूर्तमिवाऽमलम् ॥ २३८ ॥
वादित्राणां महाघोषैर्व्यानशे सकला दिशः ।
अधर्मवार्ता सर्वत्र सर्वतस्तिरयन्निव ॥ २३९ ॥
वृन्दारकाणां वृन्देभ्यः स्पष्टो जयजयारवः ।
उत्तस्थे मोहराजस्य प्रवासपटहोपमः ॥ २४० ॥
क्षणमग्रे क्षणं पृष्ठे पौरास्तस्थुः प्रमोदतः ।
स्वामिनो विरहं सोढुमप्रौढा इव सर्वतः ॥ २४१ ॥
केऽप्यारुरुहुरट्टाग्रं सौधाग्राणि च केचन ।
सन्मञ्चाग्राणि केचिच्च प्रभोर्दर्शनकाम्यया ॥ २४२ ॥
हस्त्यश्वरथपादातपौरवृन्दपरावृतः ।
श्रीमत्कुम्भमहीपालश्चचाल जिनपृष्ठतः ॥ २४३ ॥
करिणीपृष्ठविन्यस्तमञ्चिकासनमासिता ।
प्रभावत्यपि गोत्रस्त्रीसंहत्या पर्यलङ्कृता ॥ २४४ ॥
स्वामिदीक्षाश्रुतेरुत्कैः प्रविव्रजिषुभिः समम् ।
राजभिस्त्रिशतीसंख्यैः सहर्षैरग्रतः स्थितैः ॥ २४५ ॥
स्त्रीणामप्यान्तरपरीवाराणां च त्रिभिः शतैः ।
दिदृक्षुभिः परं पौरैरुत्सवं समुपागतैः ॥ २४६ ॥
पूर्णपार्श्वो जगन्नाथो मिथिलामध्यवर्त्मना ।
वधूपाणिमिवादातुं दीक्षामुत्को वरो यथा ॥ २४७ ॥
शिबिकावाहिनस्तत्र दिव्याभरणभासुराः ।
अदधुर्भूगतानेकाश्विनीनन्दनवैभवम् ॥ २४८ ॥
तदा श्रीमल्लिनाथस्य तस्मिन्निष्क्रमणोत्सवे ।
गतक्ष्णो दिदृक्षूणां क्षोभः स्त्रीणां क्षणादभूत्॥२४९॥
अर्धप्रोतस्फुरत्काञ्च्या प्रस्खलन्त्यः पदे पदे ।
तुङ्गजालकमध्यासुः काश्चित् स्वामिदिदृक्षया ॥२५०॥
काश्चिद् देशान्तरायातप्रियवार्ता अपास्य ताः ।

स्वामिदीक्षोत्सवं द्रष्टुं चेलुश्चपललोचनाः ॥ २५१ ॥
काश्चिद्दिम्याङ्गनाः पौत्रजन्म श्रुत्वाऽपि पावनम् ।
न दत्त्वा हर्षदामान्यधावन्तोद्दामवल्गितम् ॥२५२॥
चेलाञ्चलांश्चलत्कृश्चश्चामरवैभवात् ।
काश्चिच्च चालयामासुश्चलहाववपुर्लताः ॥ २५३ ॥
पुण्याङ्कुरानिवाऽमोघान् लाजान् काश्चन चिक्षिपुः ।
काश्चन तन्दुलान्मौलौ शुक्लध्यानलवानिव ॥ २५४ ॥
शीतांशुकरमित्राणि पूर्णपात्राणि काश्चन ।
विदधुः कराजीवे यशांसीव जगद्गुरोः ॥ २५५ ॥
स्वाम्यङ्कपूर्णकुम्भस्य स्पर्धिनः काश्चिदङ्गनाः ।
पूर्णकुम्भान् करक्रोडे दधुः श्रेयःफलोपमान् ॥२५६॥
तत्र काश्चित् मनृत्यन्ति जातपुत्रोत्सवा इव ।
गोत्रवृद्धा इव जगुर्मङ्गलान्यपि काश्चन ॥ २५७ ॥
सुरेन्द्राणां चतुःषष्टिनाट्यानीकैः प्रभोः पुरः ।
नाट्यानि चक्रिरे व्योम्नि गन्धर्वनगराणि वा ॥२५८॥
मर्त्यैरमर्त्यैः पातालवासिभिस्तैरुपागतैः ।
एकत्रैव कृतवती त्रिलोकी कौतुकादिव ॥ २५९ ॥
मिथिलामण्डनं राजगन्धर्वा नवगीतिभिः ।
अगायंस्त्रिजगन्नाथगुणग्रामाननेकधा ॥ २६० ॥
इभ्यसामन्तवर्गाणां संमर्दाद् गलितच्युतैः ।
हारै रचितपूजेव पूरभूत् सर्वतोमुखी ॥ २६१ ॥
निर्ममोऽपि जगन्नाथो मङ्गलानि पदे पदे ।
प्रतीयेषाऽनुचराणां सेवास्थितिविदो जिनाः ॥२६२॥
कांश्चिन्नमस्यतो देवानाकाशे भुवनाधिपः ।
कृतार्थान् विदधे स्मेरनयनाम्भोजवीक्षणैः ॥ २६३ ॥
एवं सुरासुरनरैः क्रियमाणमहोत्सवः ।
पुरीमोपुरमुल्लङ्घ्य भववासनिवासवत् ॥ २६४ ॥

